तस्मात् हंसपरमहंसव्यतिरिक्ताश्रमाणां कलौ सर्वथा वर्जनीयत्वमेवेति सिद्धम् । तत्रापि हंसाख्यसंन्यासस्य अनिन्दितत्वेऽपि संप्रतितनैः सांप्रदायिकैः अननुष्ठीयमानत्वात् तद्विचारोऽपि प्रकृते असंगत एव । अत एव परमहंससंन्यासः एक एव शिष्टाचारपथे सांप्रतं वर्तते ॥

परमहंसश्च द्विविधः । विद्वान्, विविदिषुश्चेति । तत्र गृहस्थाश्रमे वा विविदिषासंन्यासकाले वा कृतनिरन्तरश्रवणमनननिदिध्यासनैः उत्पन्नात्मसाक्षात्कारो भूत्वा एकान्ते मनोनाशवासनाक्षयाभ्यासार्थं विध्युक्तप्रकारेण यादृशं संन्यासं स्वीकरोति स एव विद्वत्संन्यासो नाम । न च गृहस्थाश्रमिणः अपरोक्षज्ञानं न स्यात्, कर्मानुष्ठानादिप्रयुक्तबहुविक्षेपसंभवात् इति वाच्यम्— निगृहीतमनस्कस्य पुरुषधौरेयस्य कस्यचित् गृहस्थाश्रमेऽपि आत्मसाक्षात्कारसंभवात् । अत एव याज्ञवल्क्यादीनां अपरोक्षज्ञानवतां गृहस्थानामपि मनोविश्रान्तिलाभाय विद्वत्संन्यासः आम्नायते, "एतावदरे खल्वमृतत्वमितिहोक्त्वा याज्ञवल्क्यो विजहार" इति । ननु याज्ञवल्क्यस्य विद्वत्त्वेऽपि तत् परोक्षज्ञानित्वरूपमेव अङ्गीक्रियते इति चेत् न, तथा सति अस्माकमपि तदीयवाक्यैरुत्पन्नज्ञानस्यापि परोक्षत्वप्रसं-

गात् । न च इष्टापत्तिः, अपरोक्षज्ञानोद्देशेनैव, जनकयाज्ञवल्क्यसंवादरूपवाक्यानां अस्माभिः विचार्यमाणत्वात् । किं च ' यत्साक्षादपरोक्षाद्ब्रह्म " इत्यादिरूपेण नित्यापरोक्षविषयतयैव प्रश्नच्छायायाः बृहदारण्यके तृतीयाध्याये दृश्यमानत्वात्, तत्समाधानावसरे च अपरोक्षवस्तुविषयकसमाधानस्यैव दृश्यमानत्वेन तत्समाधातुः याज्ञवल्क्यस्य अपरोक्षज्ञानित्वमवश्यंभावि इत्येव वक्तव्यम् । जीवन्मुक्तिविवेके च विद्यारण्यचरणैः याज्ञवल्क्यस्य अपरोक्षज्ञानपूर्वकमेव विद्वत्संन्यासाश्रयणं इत्यस्यार्थस्य बह्वीभिरुपपत्तिभिः समर्थितत्वात् । अत्र जायमानसकलशङ्कापङ्कप्रक्षालनं तदीयवाक्यसलिलधाराभिरेव कर्तव्यमिति नास्माकमत्र महान् प्रयत्नः । तथा च अपरोक्षज्ञानवतामेव विद्वत्संन्यासः इत्यत्र न कस्यापि विप्रतिपत्तिः । गृहस्थस्य विदुषः अष्टश्राद्धप्रैषोच्चारणाभयदानादिविधिपूर्वकमेव विद्वत्संन्यासः विधीयते इत्यादि विषयस्तु नारदपरिव्राजकोपनिषद्वाक्येभ्य एव सुधीभिरनुसन्धेयः । विविदिषासंन्यासिनस्तु श्रवणमनननिदिध्यासनैः उत्पन्नसाक्षात्कारस्य, दण्डकमण्डल्वादित्यागपूर्वकं दिगम्बरत्वेन अवस्थितिरेव विद्वत्संन्यासाश्रयणं न तु अष्टश्राद्धहोमोपवासजागरणादिकम् ; परमहंसविषये

श्राद्धादीनां असंभावितत्वात् । अत एव परमहंसपरिव्राजकोपनिषदि "यदा अलंबुद्धिर्भवेत् तदा कुटीचको वा बहूदको वा हंसो वा परमहंसो वा तत्तन्मन्त्रपूर्वकं कटिसूत्रं कौपीनं दण्डं कमण्डलुं सर्वं अप्सु विसृज्य अथ जातरूपधरश्चरेत्" इति श्रूयते ॥

अत एव नारदपरिव्राजकोपनिषद्यपि— संन्यासकाले फलबुद्धिपर्यन्तमधीत्य तदनन्तरं कटिसूत्रं कौपीनं दण्डं वस्त्रं कमण्डलुं सर्वमप्सु विसृज्य अथ जातरूपधरश्चरेत्, इति अपरोक्षज्ञानरूपफलबुद्ध्यनन्तरं दण्डादित्यागः आम्नायते । तस्मात् विविदिषासंन्यासकाले निरन्तरमनुष्ठितैः श्रवणमनननिदिध्यासनैः उत्पन्नतत्त्वसाक्षात्कारो यः पुरुषधौरेयः तस्य दण्डादित्यागपुरस्सरं जातरूपधरत्वाश्रयणमेव विद्वत्संन्यासः इति सिद्धम् ॥

अत्र केचिद्वावदूकाः विवदन्ते अधुनातनाः । तथा हि— परमहंसपरिव्राजकोपनिषद्वाक्ये अलंबुद्धिमान् परमहंसः दण्डादिकं सर्वं विसृजेत् इति श्रूयते । तथा फलबुद्धिपर्यन्तमधीत्य दण्डादिकं विसृजेदिति दण्डादित्यागः नारदपरिव्राजकोपनिषदि आम्नायते । अत्र अधीत्य इति पदस्य अध्ययनं कृत्वा इत्येवार्थः । वेदान्तश्रवणनियमवतः

परमहंसस्य अध्ययनं किमिति चेत्; तत् श्रवणमेव, नान्यत्। श्रवणप्रारम्भकाले "अधीहि भगवः" इति प्रार्थ्यमानत्वात्। तस्मादधीत्य इति पदस्य श्रवणं कृत्वा इत्येवार्थः। एवं अलंबुद्धिपर्यन्तं इत्यस्य श्रवणेन परोक्षज्ञानप्राप्तिपर्यन्तमित्येवार्थः। फलबुद्धिपर्यन्तमिति पाठेऽप्ययमेवार्थः। ततश्च परोक्षज्ञानोत्पत्तिपर्यन्तं श्रवणं मननं वा कृत्वा तदुपरि निदिध्यासनाङ्गत्वेन दण्डादित्यागपूर्वकं मुख्यपरमहंसाश्रमे स्थित्वा केवलनिदिध्यासनं कुर्वाणस्य तादृशनिदिध्यासनेन अपरोक्षज्ञानं जायते, इति स्वबुद्ध्या यत्किञ्चित्परिकल्प्य परानपि व्यामोहयन्ति।

तत्रैवं विमृशामः। पूर्वोत्तरसन्दर्भपर्यालोचनयैव शास्त्रार्थः प्रतिपत्तव्यः जिज्ञासुना, इति क्षुण्णोऽयं राजमार्गः। अत एव—

उपक्रमोपसंहारौ अभ्यासोऽपूर्वता फलम्।
अर्थवादोपपत्ती च लिङ्गं तात्पर्यनिर्णये॥

इति उपक्रमोपसंहारैकरूप्यलिङ्गस्यैव प्राधान्यमध्यवसितं विपश्चिद्भिः। नारदपरिव्राजकोपनिषदि तावत् दण्डविसर्जनविधायकवाक्यात्पूर्वं अव्यवहितवाक्यं एवं श्रूयते।

"परमहंसादित्रयाणां न कटिसूत्रं न कौपीनं न वस्त्रं न कमण्डलुः न दण्डः सार्ववर्णिकभिक्षाटनपरत्वं जातरूपधरत्वं विधिः" इति। अत्र च श्रूयमाणपरमहंसशब्दः विद्वत्संन्यासिनमेव क्रोडीकरोति। तस्यैव परमहंसोपनिषदि "कोऽयं मुख्य इति चेत् अयं मुख्यः न दण्डं न कमण्डलुं नाच्छादनं चरति परमहंसः" इत्यादिना दण्डाद्यभावचिह्नस्य बोध्यमानत्वात्। विद्वत्संन्यासपरतयैव प्रकृतवाक्यस्य श्रीमद्विद्यारण्यादिभिः जीवन्मुक्तिविवेकादिग्रन्थेषु व्याख्यातपरत्वात्। किञ्च विद्वत्संन्यासविधौ तस्यैव जातरूपधरत्वस्य श्रुत्या कण्ठतः प्रतिपाद्यमानत्वात्, दण्डादित्यागवत् जातरूपधरत्वलक्षणमपि श्रूयमाणं विद्वत्संन्यासिनमेव विशिनष्टि; तं प्रत्येव तस्य असाधारणत्वात्। एवं सार्ववर्णिकभिक्षाटनपरत्वमपि पूर्ववाक्ये श्रूयमाणं विद्वत्संन्यासिनमेव गमयति। विद्यारण्यचरणैः जीवन्मुक्तिविवेके सार्ववर्णिकभिक्षाटनस्य विद्वत्संन्यासिविषयकतयैव व्यवस्थापितत्वात्। ततश्च अव्यवहितपूर्ववाक्येऽस्मिन् परमहंसशब्देन व्यपदिष्टस्य विद्वत्संन्यासिनः दण्डाभावजातरूपधरत्वाद्यसाधारणचिह्नमभिधाय एतादृशदण्डाभावादिकं कथमस्य संजातं? इति वीक्षायां विविदिषादशायां

स्थितस्य दण्डकमण्डल्वादेः अपरोक्षज्ञानानन्तरं विधिपूर्वक-विसर्जनवशादेव संजातं इति स्पष्टीकर्तुम्, "संन्यासकाले फलबुद्धिपर्यन्तमधीत्य दण्डादिकं विसृज्य जातरूपधरश्चरेत्" इति वाक्यं प्रवृत्ते ॥

एवं उत्तरसन्दर्भेऽपि "न श्रोतव्यं किञ्चित्प्रणवादन्यत्" इति वाक्यमपि विद्वत्संन्यासिनमेव विषयीकरोति। विविदिषोः वेदान्तश्रवणादीनां अवश्यकर्तव्यतया तं प्रति न श्रोतव्यं इति निषेधस्य अनुपपद्यमानत्वात्। ननु दण्डादित्यागानन्तरं ब्रह्मप्रणवानुसन्धानं उत्तरवाक्येन विधीयते; अपरोक्षज्ञानवतः विद्वत्संन्यासिनश्च सर्वकर्तव्यशून्यतया तं प्रति ब्रह्मप्रणवानुसन्धानस्य नियमयितुमशक्यतया, प्रकृते दण्डपरित्यागो वा तदुपरितनं ब्रह्मप्रणवानुसन्धानं वा विविदिषुं प्रति विधीयते इत्येव खलु वक्तव्यम्? इति चेत्—इष्टापत्तिः। न खलु वयं विद्वत्संन्यासिनं प्रति दण्डादिविसर्जनविधायकवाक्यस्य प्रवृत्तिं ब्रूमः येनैवमाशङ्क्येत। अपि तु विविदिषासंन्यासिन एव विविदिषाफलीभूतापरोक्षज्ञानसिद्ध्यनन्तरं विद्वत्तादशायां दण्डादिविसर्जनमित्येव ब्रूमः। अभ्युपगम्य चैतदवोचाम। वस्तुतस्तु विद्वत्संन्यासिन एव ब्रह्मप्रणवानुसन्धानं मुख्यं, विविदिषोस्तु तत्

गौणमेव श्रवणाद्यभ्यासस्यैव तं प्रति प्रधानतया विहितत्वात्। द्वादशसहस्रसंख्याकप्रणवजपादीनां च श्रवणाद्यनधिकारिणं अज्ञपरमहंसं प्रत्येव विहितत्वमिति विश्वेश्वरीयादौ स्फुटीकृतत्वाच्च। विद्वत्संन्यासिनस्तु मनोनाशाद्यवस्थासैकप्रवणतया, "ओमित्यात्मानं युञ्जीत" इत्यादिवचनानुसारेण प्रणवानुसन्धानद्वारेणैव मनोनिरोधस्य कर्तव्यत्वात् तं प्रत्येव प्रणवानुसन्धानविधिः सर्वात्मना सफलो भवति। विद्वत्संन्यासिनः अपरोक्षज्ञानित्वेऽपि वासनाक्षयाद्यभावेन अविश्रान्तचित्तस्य पुनरपि कर्तव्यसद्भावात् निरतिशयकृतकृत्यत्वं नास्त्येवेत्यादिकं तु विस्पष्टमुपरिष्टादुपपादयिष्यामः। तस्मात् पूर्वोत्तरसन्दर्भयोः विद्वत्संन्यासलक्षणभूतजातरूपधरत्वादिधर्मनिरूपणस्य समानरूपत्वात् तदानुगुण्येन तन्मध्यगतवाक्यस्य विचारादिभिः अपरोक्षज्ञानसिद्ध्यनन्तरं दण्डादिविसर्जनं कर्तव्यं इत्येव श्रुतितात्पर्यविदां हृदयंगमोऽर्थो भवति॥

यदप्यापादितं पूर्वपक्षिणा "अधीहि भगवो ब्रह्म" इत्यत्र श्रवणस्यैव प्रार्थ्यमानत्वात्, अलंबुद्धिपर्यन्तमधीत्य इत्यत्रापि श्रवणं कृत्वा इत्येवार्थः इत्यादि, तत्र वदामः। 'इङ् अध्ययने' इति धातुरयं गुरुमुखोच्चारणानुच्चारणलक्ष-

णमर्थमेव मुख्यया वृत्त्या ब्रूते । तादृशाध्ययनस्य तु प्रकृते अनुपयुक्तत्वात्, पूर्वपक्षिणापि अनङ्गीकृतत्वाच्च लक्षणयैव अर्थो निर्वाह्यः । लाक्षणिकार्थस्वीकारे च प्रकृतोपयुक्तार्थ एव ग्राह्यः । प्रकृते च पूर्वोत्तरसन्दर्भयोः विद्वत्संन्यासपरत्वस्य प्रागुपपादितत्वात् तदनुगुणतया विद्वत्त्वरूपापरोक्षज्ञानप्राप्तीच्छोः श्रवणमनननिदिध्यासनानामेव समुच्चित्य अनुष्ठेयतया; अधीत्य इत्यस्य विचार्य इत्येवार्थः करणीयः । विचारश्च प्रकृतानुगुणतया श्रवणमनननिदिध्यासनानां समुच्चित्याऽनुष्ठानरूपः इत्येवाङ्गीकर्तव्यम्; "तत्रापरोक्षविद्याऽऽप्तौ विचारोऽयं समाप्यते" इत्यादिवाक्येषु त्रयाणां समुदायस्यैव विचारशब्देन अभिधीयमानत्वात् । ततश्च अधीत्य इत्यस्य विचार्य इत्येवार्थो ग्राह्यः प्रकृतानुगुण्यात् । कियत्पर्यन्तं विचार्य इति चेत्, फलबुद्धिपर्यन्तं इत्याह श्रुतिः । विचारस्य च फलं अपरोक्षज्ञानमेव, 'आत्मा वा अरे द्रष्टव्यः' इति अपरोक्षात्मदर्शनमुद्दिश्यैव श्रवणादीनां विधानात् । अत एव वार्तिककारचरणा अपि—

श्रवणादिक्रिया तावत् कर्तव्येह प्रयत्नतः ।
यावद्यथोक्तविज्ञानमाविर्भवति भास्वरम् ॥

इत्येवं अपरोक्षात्मदर्शनपर्यन्ततां श्रवणादिरूपविचारस्य

दर्शयन्ति । 'अधीहि भगवो ब्रह्म' इत्यत्र तु तत्रत्यप्रकरणानुसारेण स्मारयेत्यर्थः कृतो भाष्यकृता, इति न तत् अत्राप्यापादनीयं पूर्वपक्षिणा; प्रकृतविरोधापत्तेः । ततश्च "फलबुद्धिपर्यन्तं अधीत्य" इत्यस्य अपरोक्षज्ञानप्राप्तिपर्यन्तं विचार्य इत्यर्थः । कदा विचार्य इति शङ्कायां "संन्यासकाले" इति ब्रूते श्रुतिः; विविदिषासंन्यासकाले इति तदर्थः, तत्रैव विचारकर्तव्यतायाः श्रुतिचोदितत्वात् । तदेवं, "संन्यासकाले फलबुद्धिपर्यन्तमधीत्य अनन्तरं दण्डादीन् विसृज्य अथ जातरूपधरश्चरेत्" इति वाक्यस्य, विविदिषासंन्यासकाले, अपरोक्षज्ञानरूपफलबुद्धिपर्यन्तं श्रवणमनननिदिध्यासनाभ्यासरूपविचारं कृत्वा, तत्फलीभूताऽपरोक्षात्मदर्शनप्राप्त्यनन्तरं दण्डादीन् परित्यज्य विद्वत्संन्यासिलक्षणभूतजातरूपधरत्वं स्वीकुर्यात् इत्येवाऽर्थः सहृदयानां हृदयंगमो भवति । "अलंबुद्धिपर्यन्तमधीत्य" इति क्वाचित्कपाठेऽप्ययमेवार्थः । अपरोक्षज्ञानोद्देशेन विविदिषासंन्यासं तल्लक्षणभूतदण्डादिकं च विधिपूर्वं स्वीकृतवतः अपरोक्षज्ञानलाभे सत्येव अलंबुद्धेः न्याय्यत्वात् । यथाकथंचिदलंबुद्धिस्तु द्वित्राक्षरश्रवणमात्रेण कृतार्थंमन्यानां मूढानामपि संभवतीति न तादृशी प्रकृते विवक्षिता;

श्रुतेरपि स्वेच्छाचारप्रवर्तनेन विप्रलम्भकत्वापातात् । तस्मात् पूर्वोक्त एवार्थः स्वारसिकः । पूर्वपक्षिणस्तु एतादृशश्रुति-वाक्यमवलम्ब्य विविदिषासंन्यासस्यैव मुख्यामुख्यभेदेन द्वैविध्यं वर्णयन्ति । तथाहि । श्रवणमननाभ्यां परोक्षज्ञान-प्राप्तिपर्यन्तं दण्डधारणादिरूपः एकः । परोक्षज्ञानसिद्ध्यन-न्तरं तु दण्डादिकं सर्वं त्यक्त्वा एककौपीनधारणपूर्वकं नि-दिध्यासनमात्रोपकारी मुख्यपरमहंसाख्यः अपरः कश्चिदा-श्रमः स्वीकर्तव्यः इति हि तेषामाशयः । ततश्च विविदिषा-दशायामेव, मुख्यपरमहंसः, अमुख्यपरमहंसः इति द्वैविध्यं स्वबुद्ध्या स्वयमेव कल्पयन्ति ।

अत्र पृच्छामः, एतादृशश्रुतिवाक्ये मुख्यः इति वा अमुख्यः इति वा शब्दस्य अदर्शनात् कथं मुख्या-मुख्यरूपसंन्यासद्वैविध्यं प्रकृतवाक्याल्लभ्यते ? इति । दण्डा-दिविसर्जनविधिसामर्थ्यादेव लभ्यते इति चेत्, मैवं । दण्डादिविसर्जनस्य अपरोक्षज्ञानानन्तरकालीनत्वेन, विवि-दिषादशायां तदसंभवस्य प्रागेव उपपादितत्वात् । तस्मात् विविदिषाऽवस्थायामेव दण्डादिसाहित्यराहित्या-भ्यां आश्रमद्वैविध्यकल्पनं तेषां स्वकपोलकल्पनामात्रमे-वेति सुधीभिरवधारणीयम् । ननु तर्हि सिद्धान्ति-

नाऽपि विद्वत्तादशायां दण्डादित्यागपूर्वकं विद्वत्संन्यासाश्रयणमेव प्रकृतवाक्येन बोध्यत इति कथमुच्यते ? अत्र विद्वदादिशब्दस्य अश्रवणात् इति चेत्--- अत्र वदामः । पूर्ववाक्ये हि विद्वत्संन्यासिनां असाधारणचिह्नभूतदण्डादिराहित्यजातरूपधरत्वादीनां कथितत्वात्, तादृशविद्वद्दशा विविदिषोः कथं भविष्यति ? इति शङ्कमानान् प्रति, विविदिषोरपि, अपरोक्षज्ञानप्राप्त्यनन्तरं दण्डादिपरित्यागपूर्वकजातरूपधरत्वादेव, इति विद्वत्ताप्राप्तिप्रकारस्य स्फुटतरमुपवर्णनार्थमेव दण्डादिविसर्जनविधायकं वाक्यं प्रवृत्तमिति पूर्ववाक्यगतविद्वत्संन्यासलिङ्गबलेन तदङ्गीकारः उपपन्न एव सिद्धान्तिनां, इति ।

ननु पूर्वपक्ष्यभिमतमुख्यपरमहंसस्य प्रकृतवाक्ये ग्रहणेऽपि सर्वं समञ्जसं स्यादेव इति चेत् — सत्यं । यदि विविदिषुविद्वत्परमहंसव्यतिरिक्तः मध्यमः कश्चन परमहंसः श्रुतौ वा स्मृतौ वा पुराणे वा संप्रदाये वा दृश्येत, पूर्वपक्षिव्यतिरिक्तेन शास्त्रज्ञेन वा केनचिदभ्युपगम्येत तर्हि बाढं भवतु तस्यैव प्रकृते ग्रहणं । न तु तादृशमध्यमपरमहंसाश्रमप्रतिपादकं विस्पष्टं वचनं यत्र कुत्र वाऽपि उपलभामहे ।

ननु परमहंसोपनिषदि "कौपीनं दण्डं आच्छादनं च स्वशरीरोपभोगार्थाय लोकस्य उपकारार्थाय च परिग्रहेत्" इत्यादिना दण्डादीनां लौकिकत्वमभिधाय, "तच्च न मुख्योऽस्ति" इति दण्डाच्छादनादीनां अमुख्यत्वमभिधाय ततःपरं "कोऽयं मुख्यः इति चेत्— अयं मुख्यः, न दण्डं न शिखं न यज्ञोपवीतं नाच्छादनं चरति परमहंसः" इति दण्डाच्छादनादिरहितस्य मुख्यत्वाभिधानात् विद्वद्विविदिषुसंन्यासव्यतिरेकेण मध्यमो मुख्यपरमहंसाख्योऽपि कश्चिदाश्रमः प्रकृतवाक्येन क्रोडीकृतः। ततश्च तृतीयस्य मुख्यपरमहंसाश्रमस्यापि श्रुत्यारूढत्वात् प्रामाणिकत्वमेव इति चेत्—

अहो! अस्थाने संभ्रमः। न हि तत्र तृतीयः कश्चन परमहंसो मुख्यत्वेन श्रुतः। विद्वत्संन्यास्येव खलु तत्र मुख्यपरमहंसः इति श्रूयते, नान्यः कश्चित्। विद्वत्संन्यासपरतयैव विद्यारण्यचरणैरपि स्वकीयजीवन्मुक्तिविवेकग्रन्थे विद्वत्संन्यासप्रकरणे प्रकृतश्रुतिवाक्यस्य सविस्तरं व्याख्यातत्वात्।

तथा च जीवन्मुक्तिविवेके विद्यारण्यवचनम्—

तत्र आदौ विद्वत्संन्यासयोग्यं प्रश्नमवतारयति (श्रुतिः)

"अथ योगिनां परमहंसानां कोऽयं मार्गः तेषां का स्थितिरिति नारदो भगवन्तमुपगत्योवाच" इति । इदानीं कोऽयं मार्गः ? इति पृष्टं मार्गमुपदिशति (श्रुतिः) "असौ स्वपुत्रमित्रकलत्रबन्ध्वादीन् शिखायज्ञोपवीते स्वाध्यायं सर्वकर्माणि च संन्यस्य अयं ब्रह्माण्डं च हित्वा कौपीनं दण्डमाच्छादनं च स्वशरीरोपभोगार्थाय लोकस्य उपकारार्थाय च परिग्रहेत्" इति । तस्यार्थः; यो गृहस्थः पूर्वजन्मसञ्चितपुण्यपरिपाके सति विविदिषासंन्यासरूपं परमहंसाश्रममस्वीकृत्यैव श्रवणादिसाधनान्यनुष्ठाय तत्त्वं सम्यगवगच्छति, ततो गृहस्थस्य प्राप्तैः लौकिकवैदिकव्यवहारसहस्रैः चित्ते विक्षिप्ते सति विश्रान्तिसिद्धये विद्वत्संन्यासं चिकीर्षति, तं प्रति श्रुतौ स्वपुत्रमित्रेत्याद्युपदेशः । (विद्वत्संन्यासिनो) लोकोपकारः कः इति चेत्, लोकस्य उपकारो नाम दण्डादिलिङ्गेन एतदीयं उत्तमाश्रमं ज्ञात्वा तदुचिताभिवन्दनभिक्षाप्रदानादिप्रवृत्त्या तेषां सुकृतसिद्धिः । विद्वद्विषये कौपीनादिपरिग्रहस्य आनुकूल्यमात्रमभिप्रेत्य तस्य मुख्यत्वं प्रतिषेधति "तच्च न मुख्योऽस्ति" इति । तस्यार्थः । यत् कौपीनदण्डादिपरिग्रहणमस्ति" तत् अस्य योगिनः (विदुषः) परमहंसस्य मुख्यः कल्पो न भवति, किं तु

अनुकल्प एव । विविदिषासंन्यासिनस्तु दण्डग्रहणं मुख्यमिति कृत्वा दण्डवियोगे प्रायश्चित्तमपि स्मर्यते ।

दण्डात्मनोस्तु संयोगः सर्वदैव विधीयते ।
न दण्डेन विना गच्छेदिषुक्षेपत्रयं बुधः ॥ इति ।

विविदिषोः दण्डनाशे प्रायश्चित्तमपि प्राणायामशतं स्मर्यते । योगिनः परमहंसस्य तु मुख्यं कल्पं प्रश्नोत्तराभ्यां दर्शयति "कोऽयं मुख्य इति चेदयं मुख्यः न दण्डं न शिखं न यज्ञोपवीतं नाच्छादनं चरति परमहंसः इति । यथा विविदिषुः परमहंसः शिखायज्ञोपवीताभ्यां रहितो मुख्यः तथा योगी दण्डाच्छादनाभ्यां रहितः सन् मुख्यो भवति । दण्डस्य वैणवत्वादिलक्षणं आच्छादनस्य कन्थात्वादिलक्षणं च परीक्षितुं, दण्डादिकं संपादयितुं रक्षितुं च, चित्ते व्यापृते सति चित्तवृत्तिनिरोधलक्षणयोगो न सिद्ध्येदिति । तच्च न युक्तं । न हि वरविघाताय कन्योद्वाहः इति न्यायात्" इति ॥

एवं परमहंसोपनिषद्वाक्यानि विद्वत्परतया व्याख्याय विद्यारण्यचरणाः अन्तिमं वाक्यं एवं अवतारयन्ति । अथ विद्वत्संन्यासं उपसंहरति "'यत्पूर्णानन्दैकबोधस्तद्ब्रह्मा-

ऽहमस्मीति कृतकृत्यो भवति कृतकृत्यो भवति" इति। इमानि च विद्यारण्यवचनानि विप्रतिपन्नानां, अपरिशीलितग्रन्थ-मर्यादानां आधुनिकानां, प्रत्ययजननायैव सांप्रतं सविस्तरं प्रादीदृशाम । तदेवं परमहंसोपनिषद्वाक्यं समग्रमपि विद्व-त्संन्यासपरतया व्याचक्षाणैः विद्वद्प्रेसरैः विद्यारण्यचरणैः विद्वत्संन्यासिनः एकस्यैव दण्डादिविसर्जनमङ्गीकृतं । वि-विदिषासंन्यासिनस्तु विद्वत्ताप्राप्तिपर्यन्तं दण्डधारणमेव न्या-य्यं दण्डत्यागे च पातित्यमेव स्यादिति स्पष्टतया प्रत्यपादि। तदेवं स्थिते विद्वदवस्थायाः पूर्वं दण्डत्यागपूर्वकं निदिध्या-सनाङ्गतया मुख्यपक्षपरमहंसाश्रमः कश्चित् स्वीकर्तव्यः इति वदतां, विविदिषादशायामेव दण्डादिसाहित्यराहित्याभ्यां मु-ख्यामुख्यविभागात् आश्रमद्वैविध्यमभ्युपगच्छतां अभूतपूर्वो-ऽयं कल्पनाविशेषो निर्मूलक एवेति नात्र खलु मात्रयाऽपि संशीतिः। नारदपरिव्राजकाद्युपनषत्सु दण्डादिविसर्जनप्रक-रणे मुख्यामुख्यादिशब्दाभावात् परमहंसोपनिषद्वाक्यादेव मध्यममुख्यपरमहंसाश्रमो नाम कश्चिदस्तीति पूर्वपक्षिणा-ऽप्यङ्गीकर्तव्यं, गत्यन्तराभावात्। तस्य तु वाक्यस्य पूर्वो-क्तरीत्या विद्वत्परतयैव विद्यारण्यचरणैः व्याख्याततत्वात् पूर्व-पक्ष्यवलंबिता गतिरपि दुर्गतिरेव इति स्थिते, कुतो दण्डा-

द्विविधर्जनं ? कुतस्तरां मुख्यपरमहंसाश्रमपरिग्रहः ? कुत-स्तमां तत्र निदिध्यासनमात्रस्य अनुष्ठानं नाम ? तस्मात् परमहंसोपनिषद्गतवाक्यशकलावष्टम्भप्रत्याशयाऽपि विद्वत्प-रमहंसव्यतिरिक्तमुख्यपरमहंसाश्रमस्य अपूर्वस्य परिकल्पनं पूर्वपक्षिणो न संजाघटीति । प्रत्युत स्वबुद्धिकल्पनामात्रत्वात् अप्रामाणिकत्वमेवेति विविदिषवो विदांकुर्वन्तु ॥

ननु तथापि दण्डादिकं लोकस्योपकारार्थाय परिग्रहेत् इति वचनात् तच्च न मुख्योऽस्ति इति वचनाच्च, विविदि-षोरपि दण्डादिपरिग्रहः अमुख्यः इति प्रतीयते इति चेत् नैवं । प्रकरणविरोधात् । तथा हि । उपक्रमे "अथातो योगिनां परमहंसानां" इति विद्वत्संन्यासस्यैव उपक्रमात्, विद्यारण्यचरणव्याख्यानरीत्या "यत्पूर्णानन्दैकबोधः" इत्या-द्युपसंहारवाक्यस्यापि विद्वत्संन्यासोपसंहारपरत्वस्यैव अ-भ्युपेयत्वात् तन्मध्यगतस्य "तच्च न मुख्योऽस्ति" इति वाक्यस्यापि विद्वत्परमहंसविषयकत्वमेव न्याय्यम् । तन्म-ध्यगतवाक्यशकलस्य परं अविद्वद्विषयकत्वस्य सर्वथाप्यनु-पपद्यमानत्वात् । सन्दंशन्यायविरोधाच्च ॥

ननु विद्यारण्यचरणैरेव अविद्वद्विषयेऽपि काष्ठदण्डस्य अनावश्यकत्वं अमुख्यत्वं च प्रतिपादितं । तथा च तद्वचनं

"अयं ज्ञानदंडो येन परमहंसेन धृतः स एव मुख्यः एकदण्डीत्युच्यते। मानसस्य ज्ञानदण्डस्य कदाचित् चित्त-विक्षेपेण विस्मृतिः प्रसज्येतेति तन्निवारणार्थं स्मारकः काष्ठ-दण्डो ध्रियते" इति। न च एतद्वाक्यं विद्वत्संन्यासिविषयमिति शङ्कनीयं, विद्वत्संन्यासिनो दण्डस्यैव अप्रसक्तेः। ततश्च अविदुषोऽपि ज्ञानदण्डवतः काष्ठदण्डः अनावश्यकः इति चेत्—

मैवं; विद्यारण्यचरणवचनानां आशयापरिज्ञानात्; स्ववचनविरोधाच्च। तथाहि, प्रकृतश्रुत्या विद्वांसं प्रति दण्डस्य अमुख्यत्वे प्रतिपादिते, तर्हि दण्डादिरहितस्य कथं परमहंसत्वं? इति शंकायां, विदुषः ज्ञानदण्डसत्वात् तस्यापि एकदण्डित्वप्रयुक्तपरमहंसत्वं दुर्निवारं इति वक्तुं "ज्ञानदण्डो धृतो येन" इति परमहंसोपनिषद्वाक्यं प्रवृत्तं इत्येवं तदाशयमुपवर्णयतां विद्यारण्यचरणानां, विद्वत्परमहंसविषय एव काष्ठदण्डानावश्यकत्वस्य तत्प्रतिनिधिभूतज्ञानदण्डवत्वस्य च प्रतिपादने तात्पर्यमिति स्फुटमेव॥

तथा च विद्यारण्यवचनं 'ननु दण्डग्रहणविधिबलोपेताः विविदिषासंन्यासिनः योगिनं दण्डेन रहितं परमहंसं नाङ्गीकुर्वन्ति, इत्याशंक्याह श्रुतिः—

ज्ञानदण्डो धृतो येन ह्येकदण्डी स उच्यते ।
काष्ठदण्डो धृतो येन सर्वाशी ज्ञानवर्जितः ॥
स याति नरकान्घोरान्महारौरवसंज्ञितान् ॥ इति ।

एवं सति ज्ञानदण्डकाष्ठदण्डयोः यत् तारतम्यं उत्तमाधमत्वरूपं तदिदमवगत्य उत्तमं ज्ञानदण्डं यो धारयति स एव मुख्यः परमहंस इत्यवगन्तव्यं' इत्यादि । एतैश्च वचनैः ज्ञानदण्डवतो विदुष एव विषये काष्ठदण्डस्य अमुख्यत्वं प्रतिपाद्यते । अत एव प्रकृतश्रुतिवाक्येनापि ज्ञानदण्डस्य स्तवनार्थमेव काष्ठदण्डनिन्दा विद्वांसं प्रति क्रियते नहिनिन्दान्यायेन । आपातप्रज्ञास्तु केचित् वचनविभागमकृत्वा प्रकृतवाक्यं विविदिषुपक्षेऽपि योजयित्वा विविदिषोरपि दण्डादिपरिग्रहस्य अमुख्यत्वं प्रतिपादयन्ति । तत्तु असंगतं प्रकरणविरुद्धं च । विद्वद्विषयकतयैव प्रकृतवचनस्य उपपादितत्वात्, विद्वत्संन्यासप्रकरणे विविदिषोः दण्डानावश्यकत्ववचनस्य प्रकरणविरुद्धत्वाच्च । विविदिषोः अज्ञानित्वेन ज्ञानदण्डवत्त्वस्य समर्थयितुमशक्यत्वाच्च। न च परोक्षज्ञानवत्त्वेन विविदिषोरपि ज्ञानदण्डवत्त्वसमर्थनप्रत्याशा समुचिता, विद्वत्संन्यासप्रकरणे अपरोक्षज्ञानस्यैव प्रकृतत्वात् विविदिषौ तदभावाच्च । न च विद्वत्परमहंसे

दण्डप्रसक्तेरेव अभावात्, तस्य निषेधायोगेन मुख्यामुख्यत्ववचनं सर्वं विविदिषुविषयकमेव इति वाच्यम्, श्रुत्यैव योगिपरमहंसाख्यं विद्वत्संन्यासिनमुपक्रम्य तस्यापि लोकोपकारचिकीर्षायां सत्यां दण्डादिविधानात्। विद्वत्परमहंसविषयकतयैव तत्र दण्डादिविधानमिति विद्यारण्यचरणैः व्याख्यातत्वाच्च। ननु दण्डादिविधानेऽपि तस्य अमुख्यत्वमेव श्रुतौ वर्णितं इति चेत्— सत्यं; यस्य विद्वत्परमहंसस्य लोकोपचिकीर्षा तस्य अमुख्यदण्डादिपरिग्रहविधिः। यस्य लोकोपचिकीर्षा नास्ति तस्य सर्वत्यागपूर्वकं मुख्यभूतजातरूपधरत्वस्वीकारः इति विद्वत्परमहंसानामेव विषये व्यवस्थितविकल्पाङ्गीकारात् न कोऽपि प्रकृते दोषः समापतति। यद्यपि परमहंसोपनिषदि गृहस्थस्य विदुषः विद्वत्संन्यासाश्रयणकाले दण्डादेः मुख्यत्वामुख्यत्वविचार एव प्रस्तुतः तथापि विविदिषोः संन्यासिनोपि अपरोक्षज्ञानप्राप्त्यनन्तरं विद्वत्संन्यासाश्रयणार्थं दण्डादिविसर्जनस्य अन्यत्र कथितत्वात् तुल्यन्यायेन विद्वत्संन्यासप्राप्तीच्छोः विविदिषुपरमहंसस्यापि विषये मुख्यामुख्यत्वविचारो न्याय्य एव। विद्वत्तायाः उभयत्र साधारणत्वात्। तदेवं दण्डादिपरिग्रहस्य विद्वांसं प्रति वैकल्पिकत्वादेव धर्मसि-

न्धुकारैः तद्विषये दण्डादिपरिग्रहस्य कृताकृतत्वमुक्तम्। विविदिषुविषये च नित्यत्वमभिहितं। तथा च तद्वचनं— "परमहंसस्य दण्डधारणं विविदिषायां नित्यं, विद्वत्ताद्शायां तु कृताकृतं" इति। अत एव विद्यारण्यचरणैरुक्तं "विविदिषासंन्यासिनस्तु दण्डग्रहणं मुख्यमिति कृत्वा दण्डवियोगस्य निषेधः श्रूयते" इति। अत एव पराशर-माधवीयेऽपि दण्डादीनां विविदिषादशायां आवश्यकत्वं विद्वत्तादशायां तु तन्नास्तीति कण्ठत एवोक्तं। तथा च पराशरमाधवीयवचनं—

"ननु परमहंसोपनिषदि एकदण्डोऽपि अमुख्यत्वेन श्रूयते ? बाढं। नास्त्येव विद्वत्परमहंसस्य बाह्ययष्ट्युपयोगः। यष्टिधारणं तु विविदिषोः परमहंसस्य। अत एव वाक्यशेषे ज्ञानमेव तस्य दण्डः इत्युक्तं "ज्ञानदण्डो धृतो येन ह्येक-दण्डी स उच्यते" इति। तस्मात् द्वैविध्यसद्भावात्संन्यासस्य क्वचित् दण्डादिनिवारणं विद्वत्परमहंसविषयं। विविदिषोस्तु श्रवणमननादिकर्तव्यसद्भावात् तदुपकारित्वेन दण्डधारणादिनियमः उपपद्यते" इति॥

अत्र च श्रवणमननादि इति आदिपदेन निदिध्यासनस्य संग्रहः। ततश्च श्रवणमनननिदिध्यासनैः तत्त्वज्ञानं याव-

द्भवति तावत्पर्यन्तं तदुपकारितया दण्डधारणं नियतमेवेति विद्यारण्यचरणैः स्वकीयाभिप्रायः कण्ठत एवोद्घाटितः। एतेन परमहंसोपनिषदि दण्डादिकं लोकोपकारार्थाय परिग्रहेत् इति वाक्यबलात्, विदुषो वा विविदिषोर्वा दण्डादिपरिग्रहो लौकिक एव न मुख्यः इति वदन्तः परास्ताः। तदभिप्रायाभिज्ञैरेव विद्यारण्यचरणैः तदुक्तवाक्यानां विद्वद्विषयकत्वप्रदर्शनपूर्वकं श्रवणमनननिदिध्यासनोपकारितया विविदिषुं प्रति दण्डादिधारणस्य नियमितत्वात् तदकरणे च प्रत्यवायश्रवणात् ॥

एतेनैव च "फलबुद्धिपर्यन्तमधीत्य दण्डादीन् विसृज्य इति नारदपरिव्राजकोपनिषद्वाक्यस्य श्रवणमनननिदिध्यासनैः स्वफलीभूतापरोक्षसाक्षात्कारनिष्पत्त्यनन्तरं दण्डादिविसर्जनं इति सिद्धान्तिभिः क्रियमाणं अर्थवर्णनं असंगतं, अपरोक्षज्ञानानन्तरं तादृशस्य कृतकृत्यतया दण्डादित्यागविधेः तं प्रति अनुपपन्नत्वेन, विविदिषादशायां दण्डादिविसर्जनं इत्यर्थ एव प्रकृते संगतः" इति यत्त कैश्चिदुक्तं तदपि दूरतः परास्तं। विविदिषाफलीभूतापरोक्षज्ञानसिद्धिपर्यन्तं दण्डादिधारणस्य श्रुतिस्मृत्याद्यनुसारेण विद्यारण्यचरणैः अन्यैश्च धर्मशास्त्रनिबन्धकारैर्नियमितत्वात् ॥

ननु "निस्त्रैगुण्ये पथि विचरतां को विधिः को निषेधः" इति न्यायेन विद्वांसं प्रति विधिनिषेधयोरभावात् कथं दण्डादित्यागविधिः तद्विषये संभवति? इति चेत— अत्र ब्रूमः। निस्त्रैगुण्ये इत्यादिवाक्यं, तथा तत्त्वज्ञानिनः कृतकृत्यत्वप्रतिपादकवाक्यानि च जीवन्मुक्तिपर्यन्ततत्त्वज्ञानं येषामस्ति तद्विषयाणि। विद्वत्संन्यासिनस्तु अपरोक्षज्ञानसत्त्वेऽपि मनोनाशवासनाक्षयाद्यभावेन चित्तविश्रान्त्यभावात् जीवन्मुक्तिसुखं नास्त्येव। अयमेव विषयो विद्यारण्यचरणैः जीवन्मुक्तिविवेके आशंक्य समाहितः। तथा च तद्वाक्यं— 'न च तत्त्वविदि कर्तृत्वस्य अत्यन्ताभावः शंकनीयः; चिदात्मन्यारोपितस्य कर्तृत्वस्य विद्यया अपोहितत्वेऽपि चिच्छायोपेतान्तःकरणोपाधौ विक्रियासहस्रयुक्ते स्वतस्सिद्धस्य कर्तृत्वस्य यावद्द्रव्यभावित्वात्। न च—

ज्ञानामृतेन तृप्तस्य कृतकृत्यस्य योगिनः।
नैवास्ति किञ्चित्कर्तव्यं अस्ति चेन्न स तत्त्ववित्॥

इत्यादिस्मृतिविरोधः सत्यपि ज्ञाने विश्रान्तिरहितस्य तृप्त्यभावेन विश्रान्तिसंपादनलक्षणकर्तव्यशेषसद्भावेन कृतकृत्यत्वाभावात्, इति। विद्वत्संन्यासिनोऽपि सातिशयं

कृतकृत्यत्वमस्त्येव, तेनापि तत्त्वज्ञानपर्यन्तस्य साधनकलापस्य संपादितत्वात् मनोनाशवासनाक्षयसंपादनानन्तरं तु विदुषोऽपि निरतिशयं कृतकृत्यत्वं भविष्यति, इत्यादित्रिभागस्तु जीवन्मुक्तिविवेकादिग्रन्थेभ्य एव सुधीभिरनुसन्धेयः । तदेवं 'संन्यासकाले फलबुद्धिपर्यन्तमधीत्य, इत्यादिवाक्येन विधीयमानं दण्डादिविसर्जनं अपरोक्षज्ञानिविषयमेवेति सिद्धम् ॥

एवमेव परमहंसपरिव्राजकोपनिषद्यपि "यदा अलंबुद्धिर्भवेत् तदा कुटीचको वा बहूदको वा हंसो वा परमहंसो वा तत्तन्मन्त्रपूर्वकं कटिसूत्रं कौपीनं दण्डं कमण्डलुं सर्वमप्सु विसृज्य अथ जातरूपधरश्चरेत्" इति वाक्ये परमहंसस्य विधीयमानं दण्डादिविसर्जनं अपरोक्षज्ञानानन्तरकालिकमेवेति श्रुतेराशयातिशयो लक्ष्यते । तथाहि अत्र पूर्वस्मिन् सन्दर्भे "चतुर्षु वर्णेषु अभिशस्तपतितवर्जितेषु पशुरद्रोही भैक्षमाणः सर्वेषु लाभालाभसमो भूत्वा करपात्रमधूकरेणान्नमश्नन्" इत्यादिना सार्ववर्णिकभिक्षाचरणादिरूपं विद्वत्संन्यासिनः असाधारणलक्षणमभिधाय एतादृशलक्षणं केन क्रमेण अधस्तनैः अधिकारिभिः प्राप्तव्यं इति वीक्षायां तत्प्रतिपादनार्थं यदा अलंबुद्धिर्भवेत् इत्यादिवचनं

प्रवृत्तम् । ततश्च कुटीचकादीनां स्वप्राप्तव्यफललाभे सति यदा पर्याप्ताबुद्धिर्भवति तदा दण्डादित्यागोऽयमभ्यनुज्ञायते । परमहंसस्य च स्वप्राप्तव्यफलं अपरोक्षसाक्षात्कार एव । साक्षात्कारोद्देशेनैव पारमहंस्यस्य तेन स्वीकृतत्वात् । ततश्च स्वोद्दिष्टफलप्राप्त्यनन्तरमेव अलंबुद्धेर्न्याय्यतया अपरोक्षसाक्षात्कारानन्तरं परमहंसो दण्डादीन् विसृजेदित्येव तद्विषये श्रुत्यर्थो वर्णनीयः । अन्यथा दण्डादीनां तत्प्रयुक्ताश्रमधर्माणां च अनुष्ठाने आलस्यादिवशात् कष्टताबुद्ध्या वा "इतःपरं दण्डादिपरिग्रहणश्रमैरलं" इति बुद्धिरेव अलंबुद्धिः इत्यपि श्रुत्यर्थवर्णनापत्त्या श्रुतेः स्वेच्छाचारबोधकत्वापत्तेः । एवं अपार्थं श्रुतौ कल्पयित्वा आलस्यादिना दण्डादिकं ये परित्यजन्ति तान् पृच्छामः । किमर्थं वा श्रीमद्भिः आश्रमकाले दण्डादिकं परिगृहीतमिति । यदि ते वदेयुः गुरुनिकटे वत्सरं वत्सरद्वयपर्यन्तं वा श्रवणं कर्तुं श्रवणांगतया दण्डादिधारणं कृतमिति, तान् प्रति ब्रूमः केवलश्रवणांगतयैव दण्डादिधारणं तच्च श्रवणपर्यन्तमेवेत्यत्र श्रुतौ वा स्मृतौ वा पुराणे वा संप्रदाये वा न किमपि प्रमाणवचनमुपलभामहे । यदा अलंबुद्धिर्भवेत्, इत्यादिवाक्यमेव प्रमाणमिति चेत्— तर्हि एतादृशालंबुद्धेः

दण्डादिपरिग्रहात्पूर्वमपि कस्यचित् अलसशिखामणेः संभवेन तत्कृतदण्डादित्यागस्यापि प्रामाणिकत्वापत्तिः । एवं स्वेच्छाचारप्रवर्तनार्थं वा श्रुतेः प्रवृत्तिः ? मैवं मैवं । तस्मात् श्रुतिवाक्येषु नवीननवीनार्थकल्पनं विहाय विद्यारण्यादिधर्ममार्गप्रवर्तकैः प्रदर्शितं पन्थानं अनुसृत्य प्रवर्तनमेव न्याय्यं, परमार्थतो मुमुक्षवश्चेत् । विद्यारण्यप्रभृतिभिश्च अपरोक्षज्ञानपर्यन्तं दण्डधारणादिनियमस्य श्रुतितात्पर्यनिर्धारणपूर्वकं प्रतिपादितत्वात् तदुल्लंघने ईश्वराज्ञोल्लंघनजन्यपातकमेव तेषां स्यात् । तस्मात् परमहंसपरिव्राजकोपनिषद्वाक्यानुसारेणापि, अपरोक्षज्ञानानन्तरकालीनत्वमेव परमहंसं प्रति दण्डादित्यागविधेः संभवति ॥ अभ्युपगम्य चैतत्सर्वं सविस्तरमवोचाम ॥

वस्तुतस्तु अपरोक्षज्ञानानन्तरमेव परमहंसस्य दण्डादित्यागः इति नारदपरिव्राजकोपनिषद्येव अन्यत्र स्फुटतरं निरटङ्कि ॥ एवं हि तत्र श्रूयते— " श्वेतकेतुऋभुनिदाघजडभरतऋषभदूर्वासंसंवर्तकसनत्सुजातवैदेहवटासिद्धशुकवामदेव दत्तात्रेयरैवतकगोरक्षावधूतवत् अव्यक्तलिंगः अव्यक्ताचारो बालोन्मत्तपिशाचवत् अनुन्मत्तोऽप्युन्मत्तवदाचरन् त्रिदण्डं शिक्यं पात्रं कमण्डलुं कटिसूत्रं कौपीनं दण्डं वस्त्रं

कमण्डलुं सर्वमप्सु विसृज्य अथ जातरूपधरश्चरेत् इति। अत्र च जडभरतादिवत् अपरोक्षज्ञानवान् यो वर्तते उन्मत्तादिवत्प्रतीयमानश्च तस्यैव दण्डादित्यागपूर्वकजातरूपधरत्वाश्रयणे अधिकारः इति श्रुत्यैव विस्पष्टमुपपाद्यमाने सति प्रकृते किमपरं प्रमाणमन्वेषणीयम्? यद्यपि विस्पष्टतरं इदमेकमेव वाक्यं स्वीकृत्याऽपि अद्यतनैः क्रियमाणदण्डत्यागादिकं अशास्त्रीयमेवेति प्रसाधयितुं शक्यमस्माभिः, तथाऽपि पूर्वपक्ष्यवलंबितश्रुतिवाक्ययोः तत्कल्पितार्थाभासानिराकरणे मन्दप्रज्ञानां तत्राऽप्युपादेयताभ्रान्तिः स्यादिति कृत्वैव तन्निराकरणार्थं वयं प्रावर्तिष्महि। अत एव पूर्वपक्षिणोऽपि विस्पष्टार्थमिदं वाक्यं प्रच्छाद्य सन्दिग्धार्थवत्प्रतीयमानं वाक्यद्वयमादायैव शास्त्रार्थवर्णने प्रावर्तिषत अहो! वञ्चनावैदग्धी विदग्धंमन्यानां। किञ्च सदाशिवब्रह्मेन्द्रप्रभृतयः अपरोक्षज्ञानिन एव सन्तः दण्डादिकं विसृज्य विद्वत्पारमहंस्यमूरीकृत्य जातरूपधरा एव सर्वत्र पर्यटन्तः तदुपरि अतिवर्णाश्रमिणो जाताः इति शिष्टप्रवादात् सदाचारोऽपि प्रकृतविषये प्रमाणम्॥

अपि च स्मृतिरपि जीवन्मुक्तिविवेके उदाहृता प्रकृतमर्थं स्पष्टीकरोति। तथा च स्मृतिः—

यदा तु विदितं तत्त्वं परं ब्रह्म सनातनम् ।
तदैकदण्डं संगृह्य सोपवीतशिखां त्यजेत् ॥
ज्ञात्वा सम्यक्परं ब्रह्म सर्वं त्यक्त्वा परिव्रजेत् । इति ।

अत्र च टीका । विदितं इत्यस्य परोक्षत्वेन ज्ञातमित्यर्थः । ज्ञात्वा सम्यगिति । अप्रामाण्यज्ञानानास्कन्दितत्वे सति प्रमात्राभिन्नविषयत्वलक्षणेन अपरोक्षत्वेन ज्ञात्वा इत्यर्थः । तथा चात्र विविदिषासंन्यासाऽनुवादपूर्वकं विद्वत्संन्यासकथनमिति भावः, इति— अत्र च ज्ञात्वा सम्यक्परं ब्रह्म सर्वं त्यक्त्वा परिव्रजेत् , इति वाक्येन विविदिषासंन्यासिनः अपरोक्षज्ञानानन्तरमेव दण्डादिसर्वत्यागः इत्यस्याऽर्थस्य विस्पष्टमुपपाद्यमानत्वात् तावत्पर्यन्तं दण्डादिधारणं अवश्यं कर्तव्यमेवेति ध्वनितम् । ततश्च यत्र कुत्राऽपि परोक्षज्ञानमात्रेण दण्डादित्यागविषये अनुमत्यदर्शनात् , प्रत्युत अपरोक्षज्ञानपर्यन्तं दण्डादिधारणीयत्वप्रतिपादकवचनानां बहुलमुपलंभाच्च पूर्वपक्षिणां मतं दुर्मतमेवेत्यत्र वेदपुरुष एव प्रमाणम् । एतेन श्रवणफलरूपं परोक्षज्ञानं संप्राप्य दण्डादीन् विसृज्य उपरिवननिदिध्यासनरूपोत्तमज्ञानाभ्यासं कुर्यात् इत्येव नारदपरिव्राजकश्रुतिवाक्यार्थः, इति यदुक्तं आधुनिकैः कैश्चित् तदपास्तं, पूर्वोक्तश्रुतिस्मृतिविद्यारण्यवचनादिविरोधात् ॥

पूर्वोक्तेऽस्मिन् विद्वत्संन्यासे अपरोक्षात्मज्ञानवानेव अधिकारी, स च गृहस्थो वा भवतु विविदिषासंन्यासी वा भवतु विद्वत्त्वापरपर्यायं अपरोक्षात्मज्ञानमेव तत्राधिकारित्वावच्छेदकमिति मन्तव्यम् ।

तत्र प्रमाणं बृहदारण्यकोपनिषत् । तथा च श्रूयते "एतं वै तमात्मानं विदित्वा ब्राह्मणाः पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थाय अथ भिक्षाचर्यं चरन्ति । एतमेव विदित्वा मुनिर्भवति" इत्यादि । विद्वत्संन्यासिना च अनुष्ठेया धर्माः तत्त्वानुस्मरण, वासनाक्षयमनोनाशाभ्यासा एव। तेषां स्वरूपं विद्यारण्यचरणैः जीवन्मुक्तिविवेके कथितं। "पूर्वापरपरामर्शमन्तरेण सहसा उत्पद्यमानस्य क्रोधादिवृत्तिविशेषस्य हेतुः चित्तगतसंस्कारो वासना, पूर्वपूर्वाभ्यासेन चित्ते वास्यमानत्वात् ; तस्याश्च वासनायाः क्षयो नाम विवेकजन्यायां शान्त्यादिवासनायां दृढीकृतायां सत्यपि बाह्यनिमित्ते क्रोधाद्यनुत्पत्तिः इति । मनोनाशोऽपि तैरेव निरूपितः " प्रदीपज्वालासन्तानवत् वृत्तिसन्तानरूपेण परिणममानं अन्तःकरणद्रव्यं मननात्मकत्वात् मन इत्युच्यते । तस्य नाशो नाम वृत्तिरूपपरिणामं परित्यज्य निरुद्धस्वाकारेण परिणामः इति । तत्वानुस्मरणं नाम अपरोक्ष-

तया ज्ञातस्यैव आत्मवस्तुनः अनन्यव्यापारतया अनुसन्धानमेव। एवं चित्तवृत्तिनिरोधाद्यभ्यासानां जीवन्मुक्तिकामं विद्वत्परमहंसं प्रत्येव विहितत्वात् तस्यैव मुख्ययोगित्वं। योगश्चित्तवृत्तिनिरोधः इति पतञ्जलिना चित्तवृत्तिनिरोधस्यैव योगशब्देन व्यपदिश्यमानत्वात्। अत एव विद्वत्परमहंसस्य जीवन्मुक्तिविवेकादिग्रन्थेषु, परमहंसोपनिषदि च विद्वत्संन्यासी योगिपरमहंसः मुख्यपरमहंसः इत्यादिशब्दैर्व्यपदेशो दृश्यते ॥

यदत्र अर्वाचीनानां वचनं "तैलधारावत् अनुस्यूतध्यानरूपनिदिध्यासनस्य अभ्यास एव राजयोगाभ्यासः, निदिध्यासनस्य योगरूपत्वात् तत्परः परमहंसः योगिपरमहंस इत्युच्यते" इत्यादि तत्सर्वं स्वकपोलकल्पितमेवेति ब्रूमः; योगस्य चित्तवृत्तिनिरोधरूपत्वात् निदिध्यासनस्य च अतद्रूपत्वात्।

निरन्तरविचारो यः श्रुतार्थस्य गुरोर्मुखात्।
तन्निदिध्यासनं नाम तच्चैकाग्र्येण लभ्यते ॥

इति अनुभूतिप्रकाशे निरन्तरविचारस्यैव निदिध्यासनशब्देन अभिप्रेतत्वात्। सर्वात्मना चित्तवृत्तिनिरोधस्य च

मनोनाशाद्यभ्यासप्रवणे विदुष्येव संभवः। निदिध्यासनस्य तु श्रुतार्थे मनसः एकाग्रतापादनमात्रस्वरूपत्वात् निरोध-प्राधान्याभावेन तदनुष्ठातुः मुख्ययोगित्वं न संभवत्येव। चित्तवृत्तीनां निरोधस्य किञ्चित्किञ्चित् निदिध्यासनाभ्यासिनोऽपि संभवात् तावन्मात्रेण तस्याऽपि योगित्वं स्यादेव इति चेत्, तर्हि सन्ध्यावन्दनाद्यनुष्ठातुरपि मन्त्रार्थस्मरण-काले किञ्चित्किञ्चित् चित्तवृत्तिनिरोधसंभवात् तस्यापि योगित्वप्रसङ्गः। अभ्युपगम्य चेदमुच्यते। वस्तुतस्तु केवल-निदिध्यासनानुष्ठानं वा तदनुष्ठानमात्रमुद्दिश्य योगिपरमहंसाख्यः कश्चिदाश्रमो वा न संभवतीति प्रागेव वयं प्रत्यपीपदाम श्रुतिस्मृतियुक्त्याद्यविरोधेन।

अपि च पूर्वपक्ष्युक्तरीत्या, ध्यानमेव निदिध्यासनं स एव च राजयोगः तदभ्यासी च योगिपरमहंसः इत्यादि-कल्पना तु स्वकपोलेनैव कल्पनीया। न तत्र किञ्चित्प्रमाणं उपलभामहे। न च परमहंसोपनिषद्वाक्यावष्टम्भेन प्रमाणा-स्तित्वप्रत्याशा युक्ता; तद्गतयोगिपरमहंसशब्दस्य विद्वत्संन्यासिपरतयैव व्याख्यातत्वात्। न च विद्वत्त्वेऽपि परोक्षविद्वत्त्वमेवास्तु इति वाच्यं— विद्वत्परमहंसः योगिपरमहंसः इत्यादिशब्दानां अपरोक्षज्ञानवति परमहंस एव निरूढ-

त्वात्, तथैव विद्यारण्यचरणप्रभृतिभिः तादृशवाक्यस्य व्याख्यातचरत्वाच्च । तस्मादर्वाचीनानां वचनं प्रमाणबाह्यत्वात् उपेक्षणीयम् । ननु कथमुपेक्षणीयत्वं? तद्वचनस्याऽपि युक्तियुक्तत्वात्, तथा च तेषां वचनं "निदिध्यासनस्य सम्यग्दर्शनात्मकराजयोगत्वात् तदभ्यासार्थं मनोविक्षेपरूपप्रतिबन्धस्य निवृत्तिरावश्यकी । तदर्थमेव दण्डवस्त्रादिपरिग्रहविसर्जनं विविदिषोरपि विधीयते । दण्डस्य वैणवत्वादिलक्षणं आच्छादनस्य कन्थात्वादिलक्षणं च परीक्षितुं दण्डादिकं संपादयितुं रक्षितुं च चित्ते व्यापृते सति चित्तवृत्तिनिरोधलक्षणयोगो न सिद्ध्येत्; मानसस्य ज्ञानदण्डस्य स्मरणार्थं काष्ठदण्डो ध्रियते । परोक्षज्ञानानन्तरं सोऽप्यनावश्यकः चित्तविक्षेपकारणत्वात् । तस्मात् ज्ञानोत्पत्तेः पूर्वमपि निदिध्यासनाभ्यासिभिः दण्डादित्यागः कर्तव्य एव" इत्यादि । ततश्च अर्वाचीनानां वचनमपि युक्तियुक्तत्वात् ग्राह्यमेव इति चेत्—

अत्र ब्रूमः । निदिध्यासनं नाम श्रुतार्थस्य एकाग्रतया अनुसन्धानं, सम्यग्दर्शनं नाम अपरोक्षज्ञानं, राजयोगो नाम ध्यानादिरूपः, इत्येवं परस्परविलक्षणस्वभावानेव त्रीनेतानभ्युपयन्ति सांप्रदायिकाः । तदेवं स्थिते "निदि-

श्यासनस्य सम्यग्दर्शनात्मकराजयोगत्वात्" इति वचनं "पञ्चपाण्डवाश्रयः, मञ्चकपादवत्" इति कस्यचित् मुग्धप्रलपितमेव अनुकरोति। अहो! युक्तिमत्ता अर्वाचीनानां। किञ्च "दण्डस्य वैणवत्वादिलक्षणं" इत्यादिवाक्यं जीवन्मुक्तिविवेकप्रकरणे, विद्वत्संन्यासनिरूपणप्रस्तावे, विद्वत्संन्यासिनं प्रत्येव विद्यारण्यचरणैः प्रयुक्तं आदाय विविदिषुविषये संयोज्य तस्यापि दण्डत्यागादिकं प्रमाणाभासैः उपपादयतां अर्वाचीनानां इयमपि काचिदपरा युक्तिमत्ता। शिरसि धारणीयं चूडामणिं पादे धारयन् कश्चिन्मुग्धः यदि युक्तिमान् भवति, तर्हि विद्वत्संन्यासिविषये विद्यारण्यचरणैरुदाहृतं वाक्यं विविदिषुपरतया योजयन्नपि युक्तिमानेव खलु? कोऽत्र विशयः?। विद्यारण्यादिभिरुक्तमपि युक्तिविरुद्धत्वान्न स्वीकुर्मः। वयं तु स्वतन्त्रतयैव श्रुत्यर्थं युक्त्यनुसारेण व्याकुर्मः इति यदि अर्वाचीनाः ब्रूयुः— तर्हि तादृशानां स्वतन्त्राणां निकटे किमपरं वदिष्यामः। इदमेव पद्यं तेषां उपहरामः—

विद्यारण्यमुनीन्द्रमुख्यनिखिलप्रख्यातविद्वद्वरैः
श्रौतस्मार्तपथाऽध्वनीनधिषणैः श्रुत्यर्थ आविष्कृतः।

तत्सर्वं प्रविहाय ये विदधते श्रुत्यर्थमन्यादृशम्
स्वच्छन्दं स्वकपोलकल्पितमहो ! तेभ्यो महद्भ्यो नमः ॥
इति ॥

तस्मात् अकाण्ड एव दण्डविसर्जनादिकं कैश्चित्क्रियमाणं श्रुतिस्मृतिपुराणादिबाह्यमेव ; विद्वत्संन्यासिनं प्रत्येव तद्विधानात् । विस्तरस्तु जीवन्मुक्तिविवेकपराशरमाधवीयादिषु सुधीभिरनुसन्धेयः ॥

ननु नारदपरिव्राजकोपनिषदि "कुटीचकबहूदकयोः श्रवणं हंसपरमहंसयोर्मननं तुरीयातीतावधूतयोर्निदिध्यासनं" इति तत्तदाश्रमविभागेन श्रवणादिविधानात्, निदिध्यासनस्य च तुरीयातीतावधूताश्रमयोरेव विधानात्, तादृगाश्रमद्वयस्य च दण्डादित्यागपूर्वमेव संजातत्वात् तत्र निदिध्यासनाङ्गतया दण्डादिविसर्जनस्य अवश्यंभावित्वाच्च काण्ड एवेदं दण्डादिविसर्जनं इति चेत्, अहो ! यथाश्रुतग्राहिता प्राज्ञंमन्यानां । श्रुतयः खलु क्वचित् विधिरूपेण क्वचित् अर्थवादरूपेण च प्रवर्तन्ते । तत्र मन्दप्रज्ञाः अर्थवादवाक्योक्तमपि सर्वं वास्तवंमन्यमानाः श्रुत्यर्थं सर्वमाकुलीकुर्वन्ति । अत एवाऽऽह व्यासः ।

बिभेत्यल्पश्रुताद्वेदो मामयं प्रतरिष्यति ।
इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् ॥ इति ॥

तस्मात् मन्दप्रज्ञैः क्रियमाणः श्रुत्यर्थः विरुद्ध एव भवतीत्यत्र निदर्शनं प्रकृतपूर्वपक्षिण एव । प्रकृतवाक्यप्रकरणपर्यालोचनायां सर्वोऽयमर्थवाद इत्येव गम्यते । तथाहि नारदपरिव्राजकोपनिषदि षष्ठोपदेशारम्भे "अथ यतेर्नियमः कथं" इत्यादिना प्रश्नप्रतिवचनसन्दर्भेण परमहंसनियमवर्णनावसरे तस्य ग्रामैकरात्रवासमाधूकरभैक्ष्यादिबाह्यनियमाननभिधाय ततः परं आन्तरधर्मनिरूपणप्रस्तावे "सर्वतः स्वरूपमेव पश्यन् जीवन्मुक्तिमनुप्राप्य प्रारब्धप्रतिभासनाशपर्यन्तं चतुर्विधं स्वरूपं ज्ञात्वा देहपतनपर्यन्तं स्वरूपानुसन्धानेन वसेत्" इति वाक्येन सर्वदा स्वरूपानुसन्धानमेव परमहंसस्य आन्तरनियमः इत्युक्तं । तस्यैव स्तवनार्थं कुटीचकाद्यवधूतान्तानां स्मार्तसंन्यासिनां स्मृत्युक्ताचारानुवादपूर्वकं अन्ते "सर्वेषामात्मानुसन्धानविधिः" इति वाक्यं प्रवृत्तं । ततश्च पूर्वोक्तनियमोपेतैः सर्वैरपि स्मार्तसंन्यासिभिः अनुष्ठीयमानत्वात् आत्मानुसन्धानविधिरयं अतिप्रशस्तः ; स च परमहंसेन सर्वदा अनुष्ठेयः इत्येव अर्थवादोपबृंहितस्य पूर्वोत्तरसन्दर्भस्य तात्पर्यमवसीयते । ननु

कुटीचकादिधर्मनिरूपणे तस्य तात्पर्यमिति भ्रमितव्यं ; कुटीचकादिस्मार्तसंन्यासिधर्माणां स्मृतिपुराणादिष्वेव विधीयमानत्वौचित्येन स्मृतिविहितस्यैव श्रुतावपि पुनर्विधानस्य अनुपपन्नत्वात् परमहंसचर्याया एव उपक्रान्ततया तन्मध्ये कुटीचकादिधर्मनिरूपणस्य प्रकरणविरुद्धत्वाच्च । ननु "अथ यतेर्नियमः कथं" इति सप्तमोपदेशारम्भवाक्ये प्रयुक्तयतिशब्देन सर्वेऽपि यतयः कुतो न स्वीक्रियन्ते ? इति चेत्— पूर्वोत्तरप्रकरणविरोधादेवेति ब्रूमः । पूर्वं हि षष्ठोपदेशावसाने "चलाचलनिकेतश्च यतिर्यादृच्छिको भवेदित्युपनिषत्" इति वाक्ये परमहंसस्यैव यतिशब्देन विवक्षितत्वात्, तस्यैव विषये "अथ यतेर्नियमः कथं" इति सप्तमोपदेशारंभे प्रश्नस्य उपपन्नत्वात् । अत एव "यतेः" इति एकवचनं प्रायुङ्क्ति । अन्यथा, कुटीचकादिधर्मा एव श्रुत्या यदि विवक्ष्येरन् तर्हि यतीनां इति बहुवचनमेव प्रायोक्ष्यत । न तु तथा प्रयुक्तं । तस्मात् परमहंसचर्याया एव पूर्वोक्तायाः पुनर्विशेषान्तरजिज्ञासया अयं प्रश्नः ; कुटीचकादिधर्मानुवादश्च आत्मानुसन्धानाविध्यर्थवादरूप एव । तर्हि परमहंसधर्मोपि मध्ये अनूद्यमानः अर्थवादो भवतु, इत्यादिशंका तु उत्तरत्र सविस्तरं परिहरिष्यते । अत्रत्यार्थ-

वादवाक्यस्य यथाश्रुतार्थग्रहणे स्ववाक्यविरुद्धार्थवादित्व-मेव श्रुतेः प्रसज्येत । तथाहि अस्यामेव नारदपरिव्राजको-पनिषदि षष्ठोपदेशे परमहंसधर्मनिरूपणप्रस्तावे इदं वाक्यं प्रवृत्तम् ।

मुमुक्षुः परमो हंसः साक्षान्मोक्षैकसाधनम् ।
अभ्यसेद्ब्रह्मविज्ञानं वेदान्तश्रवणादिना ॥

ब्रह्मविज्ञानलाभाय परहंससमाह्वयः ।
शान्तिदान्त्यादिभिस्सर्वैस्साधनैस्सहितो भवेत् ॥ इति ।

अत्र च परमहंसमधिकृत्यैव श्रवणमनननिदिध्यासनानि विधीयन्ते, आदिशब्देन मनननिदिध्यासनयोः सजातीययो-रेव ग्रहणस्य न्याय्यत्वात् ।

ब्रह्मज्ञानाभ्यासश्च पञ्चदश्यां दर्शितः—

तच्चिन्तनं तत्कथनं अन्योऽन्यं तत्प्रबोधनम् ।
एतदेकपरत्वं च ब्रह्माभ्यासं विदुर्बुधाः ॥ इति

एतादृशज्ञानाभ्यासश्च कियत्पर्यन्तं कार्यः इत्यत आह श्रुतिः ब्रह्मविज्ञानलाभाय इति । ततश्च विविदिषुः परमहंसः शान्तिदान्त्यादिसहितः सन् श्रवणमनननिदिध्यासनानि

ब्रह्मापरोक्षज्ञानपर्यन्तं अभ्यसेत् इति प्रकृतश्रुतेरर्थो भवति। तदेवं परमहंसस्यैव श्रवणादौ अधिकारः इति यस्यां उपनिषदि कण्ठत एव समुद्घोषणं कृतं तस्यामेव तद्विरुद्धतया "कुटीचकबहूदकयोरेव श्रवणं, हंसपरमहंसयोः मननं" इति वाक्यस्य दृश्यमानत्वात् परस्परं महान् विरोध एव प्रकृतवाक्ययोर्जागर्ति। वाक्ययोरनयोः विरोधपरिहारस्तु अन्यतरवाक्यस्य अर्थवादत्वाङ्गीकारेणैव प्रतिपादयितुं पार्यते नान्यथा प्रकारशतेनापि। तत्र च परमहंसस्यैव श्रवणादिषु मुख्याधिकारः इति विषये, परश्शतश्रुतिस्मृतिपुराणभाष्यवार्तिकादिबहुतरप्रमाणानां विद्यमानतया,

मुमुक्षुः परमोहंसः साक्षान्मोक्षैकसाधनम्।
अभ्यसेद्ब्रह्मविज्ञानं वेदान्तश्रवणादिना॥

इति वाक्यं अन्यथा कर्तुं न शक्यते। "कुटीचकबहूदकयोः श्रवणं" इत्यादि वाक्ये तु संवादिप्रमाणान्तरस्य कस्यचिदपि अभावात् अर्थवादत्वमेव तस्य वक्तव्यं गत्यन्तराभावात्।

ततश्च यथा पूर्वकाण्डे "वैश्वानरं द्वादशकपालं निर्वपेत्पुत्रे जाते यदष्टाकपालो भवति गायत्रियैवैनं ब्रह्मवर्चसेन

धुनाति यन्नवकपालस्त्रिवृतैवास्मिन्तेजो दधाति यद्दशकपालो विराजैवास्मिन्नन्नाद्यं दधाति यदेकादशकपालस्त्रिष्टुभैवास्मि-न्निन्द्रियं दधाति यद्द्वादशकपालो जगत्यैवास्मिन्पशून्दधाति यस्मिञ्जात एतामिष्टिं निर्वपति पूत एव तेजस्व्यन्नाद इन्द्रि-यावी पशुमान् भवति" इति वाक्ये "यदष्टाकपालो भवति" इत्याद्यर्थवादवचनैः पूतत्वादिप्रत्येकफलस्य प्रति-पादनेऽपि "पूत एव तेजस्व्यन्नाद इन्द्रियावी पशुमान् भवति" इति समुच्चयफलप्रतिपादकं वाक्यमेवाऽऽश्रित्य, तादृशसमुच्चितफलकाम एव अधिकारी इति निर्णीय, प्रत्ये-कफलप्रतिपादकानां वाक्यानां अर्थवादमात्ररूपत्वमेवेत्यङ्गी-कृत्य आर्थवादिकफलानां तेषां अवयुत्यवादरूपतया नास्त्येव तेषां अधिकारितावच्छेदकधर्मबोधकत्वं, इति निर्णीतं पूर्व-तन्त्रे ॥

तथा कुटीचकबहूदकयोः श्रवणं इत्याद्यर्थवादवाक्येषु प्रत्येकं श्रवणाद्यनुष्ठानोक्तावपि तत्पूर्ववाक्ये "अभ्यसे-द्ब्रह्मविज्ञानं वेदान्तश्रवणादिना" इति श्रवणादीनां समुच्चितानुष्ठानस्यैव बोध्यमानत्वेन, तादृशानुष्ठानस्य च परमहंसमात्रे नियमितत्वेन च तस्यैव तत्र मुख्याधिकार-स्फुटीकरणात् "कुटीचकबहूदकयोः श्रवणं" इत्याद्यर्थवाद-

वाक्यस्य पूर्वोक्तरीत्या स्तावकत्वमेव अङ्गीकर्तव्यं । इत्थं विभागकरणे सत्येव पूर्वोत्तरवाक्यानि व्यवतिष्ठन्ते, अन्यथा तु वाक्ययोरनयोः परस्परं जायमानो विरोधो दुर्निवार एव स्यात् ।

ननु तर्हि कुटीचकबहूदकयोः श्रवणमात्रे अधिकारः हंसपरमहंसयोः श्रवणमननयोरुभयोराधिकारः तुरीयातीताव-धूतयोः साधनत्रयेऽप्यधिकारः, इत्येव प्रकृतश्रुत्यर्थवर्ण-नात् न पूर्वोत्तरवाक्यविरोधः, तस्मात् प्रकृतवाक्यस्य अर्थवादत्वं न न्याय्यं इति चेत्, न ; एतावताऽऽपि विरोधपरिहारस्य अलाभात् । अव्यवहितपूर्ववाक्ये हि त्रिषवणस्नानं कुटीचकस्य, बहूदकस्य द्विवारं, हंसस्य एक-वारं, परमहंसस्य मानसस्नानं, इत्यादिविधिषु कुटीचकस्य त्रिषवणस्नानमात्रं, बहूदकस्य त्रिषवणस्नानं द्विवारस्नानं च, हंसस्य एकवारं, द्विवारं, त्रिवारं च, इत्याद्यपार्थस्यापि तुल्यन्यायेन पूर्वपक्षिणा कल्पनीयत्वप्रसंगात् । यदि एता-दृशातिप्रसंगपरिहाराय त्रिषवणस्नानं कुटीचकस्य, इत्यादि-वाक्यानां यथाश्रुतार्थ एव स्वीक्रियते, तर्हि तथैव समन-न्तरवाक्येऽपि कुटीचकबहूदकयोः श्रवणं, इत्यादौ यथा-श्रुतार्थ एव स्वीकरणीयः ; एकस्मिन्सन्दर्भे विद्यमानवाक्यानां

समानरूपाणां एकरीत्यैव अर्थस्य व्युत्पादनीयत्वात्। यथाश्रुतार्थवर्णने च पूर्वोक्तदोषः तदवस्थ एव स्यात्।

अथवा पूर्वपक्ष्युक्तरीत्यैव प्रकृतश्रुतेरर्थो भवतु; तथाऽपि न किञ्चिदनिष्टमस्माकं। कुटीचकबहूदकयोः श्रवणमात्रं, अन्ययोः श्रवणमनने, अपरयोः श्रवणमनननिदिध्यासनानि, इत्येव अर्थस्य अङ्गीकरणीयतया, अस्मदभिप्रेतं श्रवणादीनां समुच्चित्यानुष्ठानं, स्तोतुमेव प्रकृतवाक्यं प्रवृत्तमिति पर्यवसानेन, प्रयोजनान्तरस्यापि लाभात् सुतरामनेनास्माकं समीहितसिद्धिः। श्रवणमनननिदिध्यासनानां समुच्चित्यानुष्ठानविधानसामर्थ्याच्च, एकैकसाधनानुष्ठानार्थतया पृथक्पृथगाश्रमभेदकल्पनं नैव न्याय्यं। अपि च यथाश्रुतार्थाङ्गीकारे कुटीचकबहूदकावस्थायां श्रवणमनुष्ठाय तदनन्तरं मननोपयोगितया हंसपरमहंसाश्रमस्वीकरणपूर्वकं यदा मननं कर्तुमुपक्रमते तदा कालव्यवधानात् पूर्वं श्रुतार्थः सर्वोऽपि विस्मृतः खलु भवेत्। तथा सति कथमयं तद्दशायां मननं कुर्वीत, तदुपरि च कथं वा निदिध्यासीत? तदेवं यथाश्रुतार्थकल्पने क्रियमाणेऽपि परश्शताः अनुपपत्तयः दुष्परिहारा एव। तस्मात् श्रुतिवाक्यानां ऐदंपर्यमविज्ञाय स्वातन्त्र्येण अर्थाभासकल्पनं न शोभते प्राज्ञानाम्। यद्यपि

एतादृशार्थाभासश्रवणेन अव्युत्पन्नबुद्धयो बहवोऽपि लौकिकाः वञ्चिता एव भवन्ति, तथापि अभिज्ञैः तादृगर्थाभासश्रवणे श्रोत्रं न देयमित्याशंसामहे। किञ्च तुर्यातीतत्वं अवधूतत्वं च अपरोक्षज्ञानिन एव अवस्थाभेदौ।

देहं विनश्वरमवस्थितमुत्थितं वा
सिद्धो न पश्यति यतोऽध्यगमत्स्वरूपम्।
दैवादुपेतमथ दैववशादपेतं
वासो यथा परिकृतं मदिरामदान्धः॥

इति भागवते यतोऽध्यगमत्स्वरूपं इत्यनेन स्वरूपसाक्षात्कारवतो विदुष एव अवधूतलक्षणकथनात्। एतेन यदुक्तं अर्वाचीनैः तुरीयातीतावधूतावुभावपि अज्ञानिविविदिषासंन्यासिनावेवेति तदपास्तं, भागवतादिवाक्यविरोधात्। यद्यपि ज्ञानिन एव अवस्थाभेदौ तुरीयातीतोऽवधूतश्चेति, तथाऽपि तुरीयातीतावधूतयोः परं कलौ वर्जनीयत्वस्य प्रागेव सप्रमाणमुपपादितत्वात् योगिपरमहंसाख्यविद्वत्संन्यास एव कलौ विधीयते; सदाशिवब्रह्मेन्द्रप्रभृतिभिः प्रामाणिकैः तस्यैव उररीकृतत्वात्। एतादृशविद्वत्संन्यासस्य च फलं जीवन्मुक्तिरेव। तदेवं इयता ग्रन्थेन विद्वत्संन्यास-

स्वरूपं तत्साधनं तत्रकर्तव्यमनोनाशाद्यभ्यासः तत्फलभूतजीवन्मुक्तिः प्रसक्तानुप्रसक्तं च किञ्चिदिति सर्वमिदं संक्षेपतोऽस्माभिरभाणि। विस्तरस्तु जीवन्मुक्तिविवेकादि-ग्रन्थत एव सुधीभिरनुसन्धेयः ॥

इतः परं विविदिषासंन्यासो नाम कः? तत्र च अधिकारी कीदृशः तेन अवश्यकर्तव्यांशाः के? तस्य फलं च किं? इति आकाङ्क्षायां, तत्र किञ्चित् संक्षेपतो विचारमवतारयामः। यद्यपि पूर्वाचार्यैरनेकैः सविस्तरमुपपादित एवा-ऽयमर्थः विविदिषासंन्यासतद्धर्मादिरूपः, तथापि यत्र अर्वाचीनानां विप्रतिपत्तिः अन्यथाग्रहणं च तादृशविषये-ष्वेव किञ्चिदिव लेखनीं व्यापारयामः। तत्र विविदिषा-संन्यासो नाम अपरोक्षसाक्षात्काररूपवेदनेच्छया श्रवणमनननिदिध्यासनाङ्गत्वेन विधिवत्क्रियमाणः सर्वकर्मसंन्यास एव। अत एव "शान्तो दान्त उपरतास्तितिक्षुः समाहितो भूत्वा आत्मन्येवात्मानं पश्यति" इत्यत्र उपरतिशब्देन संन्यासं विवक्षित्वा तद्वत एव मुख्यतया आत्मदर्शने तदुपायश्रवणादौ च मुख्याधिकारमुपपादयन्ति सांप्रदायिकाः। एतादृशसर्वकर्मत्यागश्च परमहंसस्य एकस्यैव भवति, न तु कुटीचकादीनां, तेषां तपःप्रधानत्वात् श्रवणादिषु मुख्या-

धिकाराऽलाभात्। अत एव भगवान् संक्षेपकशारीरकाचार्यः।

सर्वश्रुतिस्मृतिवचोभिरयं परिव्राट्
मुण्डः शुचिः परमहंस इति प्रसिद्धः।
ज्ञानाय साधनधनेषु नियुज्यमानः
प्रायेण बुद्धिपरिपाकमवाप्स्यतीह॥

इति परमहंसस्यैव ज्ञानसाधनश्रवणादिषु अधिकारं स्फुटीचकार।

ननु गृहस्थानामपि उद्दालकप्रभृतीनां ब्रह्मविद्योपदेशलिङ्गात् अपरोक्षज्ञानवत्त्वं श्रुत्या निर्दिश्यते, अन्यथा श्वेतकेत्वादीन् प्रति उपदेशासंभवात्। तैश्च श्रवणाद्यभ्यासपूर्वकमेव अपरोक्षज्ञानं संपादितमिति वक्तव्यं। तथा च संन्यासाभावेऽपि गृहस्थानामेव सतां श्रवणाद्यभ्यासः उपपन्नः इति चेत्—

अत्र ब्रूमः। येषां गृहस्थानां अपरोक्षज्ञानित्वं श्रुत्या प्रत्याय्यते तेषां संन्यासपूर्वकं पूर्वजन्मनि श्रवणाद्यभ्यासवशादेव प्रकृतजन्मनि तत्त्वज्ञानोदयो नान्यथा। अत एव संक्षेपशारीरके अभिहितम्।

जन्मान्तरेषु यदि साधनजातमासीत्
संन्यासपूर्वकमिदं श्रवणादिरूपम् ।
विद्यामवाप्स्यति जनः सकलोऽपि यत्र
तत्राऽऽश्रमादिषु वसन्न निवारयामः ॥ इति ॥

अत एव वार्तिककारचरणा अप्यमुमर्थमनुमोदन्ते—

सत्यपि ब्रह्मवेदित्वे नासंत्यक्तैषणोऽयतिः ।
मुक्तिभागिति चेहोक्तः संन्यासेन समुच्चयः ॥

निरस्तातिशयज्ञानो याज्ञवल्क्यो यतो गृही ।
कैवल्याश्रममास्थाय प्राप तद्वैष्णवं पदम् ॥ इति ।

अत एव गृहमेधिमण्डलमण्डनायमानाः श्रीमदप्पयदीक्षितेन्द्रा अपि तत्त्वज्ञानस्य संन्यासापूर्वजन्यत्वं प्रतिपादयामासुः स्वीये न्यायरक्षामणौ अपशूद्राधिकरणे । तथा च तद्वचनं— किं बहुना । निरस्तसमस्तासंभावनादिप्रतिबन्धनिर्विचिकित्सब्रह्मविद्योदयेऽपि अविद्याऽनिवृत्तिकराणिसत्यपि विशेषदर्शने भ्रमाऽनिवृत्तिकरोपाधिसंनिधानकल्पानि कान्यपि प्रतिबन्धकानि सन्ति । तानि सर्वाणि यज्ञदानादिभिः संन्यासापूर्वेण वेदान्तश्रवणनियमादृष्टेन च निवर्तनीयानि । एतानि च प्रतिबन्धकानि यथाऽधिकारं व्यवतिष्ठन्ते, इति ।

अत एव वार्तिककारचरणाः अन्यत्राऽपि—

त्यक्ताशेषक्रियस्यैव संसारं प्रजिहासवः ।
जिज्ञासोरेव चैकात्म्यं त्रय्यन्तेष्वधिकारिता ॥

इति अशेषकर्मत्यागिनः परमहंसस्यैव मुख्याधिकारं श्रवणादिषु प्रत्यपीपदन् । युक्तं चैतत्

आसुप्तेरामृतेः कालं नयेद्वेदान्तचिन्तया ।
दद्यान्नावसरं किञ्चित्कामादीनां मनागपि ॥

इति वाक्यानुसारेण निरन्तरनिरतिशयब्रह्मनिष्ठायाः परमहंस एव संभवात् । अन्येषामाश्रमिणां तु स्वाश्रमोक्त-कर्मानुष्ठानवैयग्र्येण अनन्यचित्ततया ब्रह्मविचाराऽसंभवात् । श्रवणार्थं स्वाश्रमधर्मत्यागे च गृहस्थादीनां प्रत्यवायश्रवणात् । जनकयाज्ञवल्क्योद्दालकादीनां तु श्रूयमाणं ब्रह्मनिष्ठत्वं पूर्व-जन्मकृतसंन्यासपूर्वकश्रवणमाहात्म्यादेवेति प्रागेवोपपादि । तर्हि गृहस्थानां सर्वात्मना अधिकारो नास्ति वा? इति चेत् मैवं; तेषामपि पापक्षयफलकब्रह्मविद्यायां अधिकारस्य स्मृत्यादिषु स्फुटीकृतत्वात् । तदुक्तम्—

दिने दिने च वेदान्तश्रवणाद्भक्तिसंयुतात् ।
गुरुशुश्रूषया लब्धात् कृच्छ्राशीतिफलं लभेत् ॥ इति ।

विविदिषूणां परमहंसानां तु शास्त्रोक्तक्रमेण श्रवणादिक-माचरतां सद्योमुक्तिरेव परमफलं । प्रतिबन्धे तु सति क्रम-मुक्तिः । तदुक्तं भगवता बादरायणेन । "ऐहिकमप्यप्रस्तुतप्रतिबन्धे तद्दर्शनात्" इति । ततश्च पापक्षयार्थब्रह्मविद्यायां गृहस्थस्य अधिकारः । सद्योमुक्तिफलकब्रह्मविद्यायां तु पर-महंसस्यैव अधिकारः ।

विविदिषोः परमहंसस्य च असाधारणं चिह्नं दण्डक-मण्डल्वादिकमेव । तच्च विविदिषाफलभूताऽपरोक्षज्ञानपर्यन्तं परमहंसेन धार्यं । ततश्च

प्रत्यक्प्रवणतां बुद्धेः कर्माण्यापाद्य शुद्धितः ।
कृतार्थान्यस्तमायान्ति प्रावृडन्ते घना इव ॥

इति नैष्कर्म्यसिद्धिवचनानुसारेण, प्रत्यक्प्रवणताऽपर-पर्यायविविदिषानिष्पत्तिपर्यन्तं यथा नित्यनैमित्तिकादिकर्मा-नुष्ठाननियमः, यथा च तादृशकर्मांगतया यज्ञोपवीतधारणा-दिनियमोऽप्याद्रियते यज्ञोपवीताद्यभावे प्रायश्चित्तस्मरणात्, तथैव प्रकृतेऽपि ।

श्रवणादिक्रिया तावत् कर्तव्येह प्रयत्नतः ।
यावद्यथोक्तविज्ञानमाविर्भवति भास्वरम् ॥

इति वार्तिककारवचनानुसारेण विविदिषाफलभूताऽपरोक्षसाक्षात्कारनिष्पत्तिपर्यन्तं, श्रवणमनननिदिध्यासनरूपाणि नित्यकर्माणि परमहंसेन कर्तव्यान्येव, श्रवणाद्युपकारकतया दण्डादिधारणमपि स्वाश्रमाऽसाधारणचिन्हं परमहंसेन कर्तव्यमिति नियम एव अङ्गीकर्तव्यः, "दण्डधारणस्य कदाचिदकरणेऽपि प्रायश्चित्तविधानात्, दण्डत्यागे शतं चरेत्" इत्यादिना। अत एव धर्मसिन्धुकारैः परमहंसस्य दण्डधारणं विविदिषादशायां नित्यमिति विविदिषाफलनिष्पत्तिपर्यन्तं दण्डधारणादिनियम एवाऽयमनुमेने। तस्मात् गृहस्थस्य यज्ञोपवीतधारणवत् परमहंसानां दण्डधारणमपि नियतमेव, तुल्यन्यायात्। न च गृहस्थानां उपवीतधारणस्य "यज्ञोपवीत्येवाधीयीत" इत्यादिवचनबलात् कर्माङ्गत्वं भवतु, परमहंसस्य तु दण्डधारणनियामकं वचनं किमपि न पश्यामः इति वाच्यं। परमहंसस्याऽपि

दण्डात्मनोस्तु संयोगः सर्वदैव विधीयते।
न दण्डेन विना गच्छेदिषुक्षेपत्रयं बुधः॥

इत्यादि दण्डधारणनियामकवचनानां भूयसां विद्यमानत्वात्। अत एव पराशरमाधवीयेऽप्युक्तं "विविदिषोस्तु

श्रवणमननादिकर्तव्यसद्भावात् दण्डधारणादिनियमः उपपद्यते" इति। अत एव च यतिधर्मनिर्णये—

दण्डत्यागं न कुर्वीत यावत्प्राणविधारणम्।
आचार्यैर्विहितो मार्गः तत्त्यागी पतितो भवेत्॥

इति विविदिषादशायां दण्डत्यागिनां पातित्यमुद्धुष्यते।

एतेन गुरूपसदनाङ्गतयैव दण्डादिधारणस्य कथितत्वात् गुरुमुखेन श्रवणानुष्ठानपर्यन्तं दण्डादिकं धार्यं अनन्तरं तु दण्डादिविसर्जनमेव कार्यं इति यदुक्तं कैश्चित् तत् दूरतो निरस्तम्। पराशरमाधवीयादिप्रामाणिकग्रन्थेषु श्रवणमननिदिध्यासनोपकारितयैव दण्डादिधारणस्य नियमितत्वात्। ननु यज्ञोपवीताभावे गृहस्थानां पातित्यमेव स्यादिति धर्मशास्त्रकारा वदन्ति। तथा परमहंसस्यापि दण्डाद्यभावे पातित्यं स्याद्वा? इति चेत्— ओं इति ब्रूमः। अत एव कंचित्कालं दण्डवियोगेऽपि "प्राणायामशतं चरेत्" इत्यादिप्रायश्चित्तं आम्नायते। तस्मात् यथा गृहस्थानां विधिवत्कर्मपरित्यागपुरस्सरं संन्यासाश्रमस्वीकारपर्यन्तं यज्ञोपवीतं कर्माङ्गभूतं सर्वदा धारणीयमेवेति नियमः, तथा परमहंसेनापि अपरोक्षज्ञानपर्यन्तं श्रवणाद्युपकारकं दण्डधारणं अवश्यमाचरणीयमेव।

ननु विविदिषाशब्दस्य वेदनेच्छा इत्यर्थः। वेदनं च परोक्षज्ञानमेवाऽस्तु, ततश्च परोक्षज्ञानप्राप्तिपर्यन्तमेव दण्डादिधारणनियमः। अन्यथा विदेहकैवल्योद्देशेनैव संन्यासस्य परिगृहीतत्वमिति कृत्वा तादृशफलसिद्धिपर्यन्तमपि दण्डादीनां धारणीयत्वापत्तिः तस्यैव अन्तिमफलत्वात् इति चेत्, मैवं— विविदिषाशब्दार्थस्यैव प्रकृते विचारणीयत्वात्। विविदिषाशब्दस्य हि वेदनेच्छेत्यर्थः। तीव्रवैराग्यवतो मुमुक्षोश्च कीदृशं वेदनमभिप्रेतं इति वीक्षायां तत् अपरोक्षात्मकं इत्येव वक्तव्यं। केवलपरोक्षज्ञानं तु पदपदार्थव्युत्पत्तिमतः साङ्गवेदाध्येतुः ब्रह्मचारिणो गृहस्थस्य वाऽपि अध्ययनकाले जायत इति तादृशफलं परमहंसेन नैषितव्यम्। अपि च गृहस्थादीनां पुराणश्रवणादपि परोक्षज्ञानोत्पत्तिसंभवेन परमहंसाश्रमपरिग्रहानन्तरमेव परोक्षज्ञानं जायते इति वचनं भ्रान्तिमूलकमेव।

तर्हि सांगवेदाध्ययनरहितानां पुंसां परमहंसाश्रमपरिग्रहः केवलपरोक्षज्ञानसंपादनार्थो भवतु, इति चेत्— तादृशानां संन्यास एव नाधिकारः।

योऽनधीत्य द्विजो वेदानन्यत्र कुरुते श्रमम्।
स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः॥

इति मनुना अनधीतवेदस्य शूद्रतुल्यत्वाभिधानेन ता-दृशानां संन्यासयोग्यताया एवासत्त्वात् । ब्राह्मणस्यैव सर्वात्मना संन्यासाधिकारः इति— एतं वै तमात्मानं विदित्वा ब्राह्मणाः पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणा-याश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति याह्येव पुत्रैषणा, इत्यादि संन्यासविधायकश्रुतौ कण्ठतः स्फुटीकृतत्वात् । तस्मात् अपरोक्षज्ञानार्थतयैव संन्यासपरिग्रहात् विविदि-षाशब्दस्य अपरोक्षज्ञानेच्छा इत्यर्थं एव साधीयान् । यद्-व्यापादितं पूर्वपक्षिणा विविदिषायाः विदेहमुक्तिपर्यन्तता-ऽपि भवतु इति तदपि अविचारितरमणीयमेव । न हि पाकार्थं काष्ठाधिरोपणं क्रियते इत्युक्ते, काष्ठाधिरोपणस्य पाकोद्देश्यकतां अविगणय्य, पक्वान्नाभ्यवहारजन्यां तृप्तिमेव फलत्वेन प्रतिपद्यते कश्चित् । तथैव प्रकृतेऽपि वेदनेच्छया क्रियमाणस्य संन्यासस्य अपरोक्षात्मवेदनमेव फलं युक्तं अव्यवहितत्वात् । न तु विदेहकैवल्यं अत्यन्तव्यव-हितत्वात् । ननु यथा पाकार्थं क्रियमाणस्य काष्ठाधिरोपण-स्य स्वप्रयुक्तपाकसाध्यौदनाभ्यवहारजनिता तृप्तिरपि पर-म्परया फलमित्यङ्गीक्रियते तथा विदेहकैवल्यस्यापि विविदिषाप्रयुक्तसर्वकर्मसंन्यासपूर्वकश्रवणाद्यभ्यासनिष्पादि-

तत्त्वज्ञानसाध्यतया तस्यापि परम्पराफलत्वं भविष्यति इति चेत्, कामं भवतु; केनेदं निवारितम्? विविदिषा-प्रयुक्तसंन्यासस्य स्वोद्देश्यभूतं वेदनमेव मुख्यं फलमिति तु वयं ब्रूमः। तादृशाव्यवहितमुख्यफलनिर्वृत्तिपर्यन्तं च श्रवणाद्युपकारितया दण्डादिधारणनियमस्तु वज्रलेपायते।

ननु नायं नियमः परमहंसानाम्—

काष्ठदण्डो धृतो येन सर्वाशी ज्ञानवर्जितः।
स याति नरकान्घोरान्महारौरवसंज्ञितान्॥

इत्यादि वचनैः काष्ठदण्डस्य निन्द्यमानत्वात् इति चेत्—पूर्वापरसन्दर्भापर्यालोचननिमित्तभ्रान्तिरेवेयं आयुष्मतः। तथाहि। इदं हि वचनं परमहंसोपनिषद्गतम्। तत्र विद्वत्संन्यास एव प्रकृतः इति सप्रपञ्चं समुपापीपदाम। तत्प्रकरणपतितं इदमपि वाक्यं विद्वत्संन्यासिविषयमेव। तद्विषये दण्डादिधारणनियमाभावप्रसञ्जनं तु अस्मदिष्टमेव। यद्युच्येत इदं वचनं क्वचित् विविदिषुसंन्यासिप्रकरणेऽप्युदाहारि इति तर्हि जीवनमात्रोद्देशेन यो मूढः दण्डादिकं धारयति तद्विषयतया योजनीयम्। अत एव ज्ञानवर्जितः इति विशेषणमपि संगच्छते। अत एव प्रकृतवाक्यमुदाहृत्य प्रकृतशङ्कामप्युद्भाव्य पराशरमाधवीये एवं समाधायि।

ननु ज्ञानरहितस्य दण्डप्रतिषेधः आम्नायते काष्ठदण्डो धृतो येन, इत्यादिः—— नैष दोषः विद्यां विविदिषां च विना जीवनार्थमेव केवलं एकदण्डं यो धारयति तद्विषयत्वात्प्रतिषेधस्य इति । अत एव च पूर्ववाक्ये "ज्ञानदण्डो धृतो येन ह्येकदण्डी स उच्यते" इति ज्ञानदण्डवतो विद्वत्परमहंसस्यैव दण्डादिनिषेधः क्रियते । न च तं प्रति दण्डस्यैव अप्रसक्तेर्निषेधायोग इति वाच्यं तं प्रत्यपि प्रसक्तेः पूर्वं सविस्तरमुपपादितत्वात् । विद्वत्प्रकरणानुसारेण च अत्र अपरोक्षज्ञानमेव ज्ञानशब्देन व्यपदिश्यते इत्याद्यपि पूर्वमेवोक्तम् ।

"ननु आथर्वण्यां श्रुतौ "ज्ञानशिखाः ज्ञाननिष्ठाः ज्ञानयज्ञोपवीतिनः । ज्ञानमेव परं तेषां पवित्रं ज्ञानमुच्यते ॥ इति परमहंसानां बाह्यशिखायज्ञोपवीताभावेऽपि, ज्ञानरूपमान्तरं तत् द्वयं अस्त्येवेति प्रतिपाद्यते । न च तत्रापि ज्ञानशब्दस्य अपरोक्षार्थकतामङ्गीकृत्य विद्वत्संन्यासिपरतयापि वाक्यमिदं घटयितुं शक्यमिति वाच्यं विविदिषुप्रकरण एवास्य वाक्यस्य यतिधर्मसंग्रहादिषु उदाहृतत्वात् । ततश्च अत्रत्यज्ञानशब्देन प्रयोजकज्ञानस्यैव विवक्षणीयतया ज्ञानदण्डो धृतो येन इत्यादि वाक्येऽपि तुल्ययुक्त्या ज्ञानशब्देन परोक्षज्ञानमेव विवक्ष्यतां इति चेत्" मैवं प्रकरणानुसारेणैव अर्थस्य

कल्पनीयत्वात् । विद्वत्संन्यासनिरूपणप्रस्तावे ह्याम्नातस्य ज्ञानशब्दस्य अपरोक्षार्थकत्वमेव न्याय्यम् । ज्ञानशिखाः ज्ञाननिष्ठाः, इति वाक्यात्पूर्वं त्वेवमाशंका प्रवृत्ता ; परमहंसस्य शिखायज्ञोपवीताभावे कथं स्वाश्रमधर्मेष्वधिकारः इति । एवं शंकायां, तत्समाधानार्थं इदं वाक्यं प्रवृत्तं ज्ञानशिखाः इत्यादि । ततश्च स्वाश्रमधर्मानुष्ठानप्रधानो यो विविदिषुपरमहंसः तद्विषयमेवेदं वाक्यमिति विस्पष्टं प्रतीयते । तस्मात् एतद्वचनदृष्टान्तेन, ज्ञानदण्डो धृतो येन, इति वाक्यस्यापि विविदिषुपरत्ववर्णनं प्रकरणस्वारस्यविदां न शोभते । अथवा, तद्वाक्यस्यापि विविदिषुपरत्वमेवास्तु, तथापि तद्विषये काष्ठदण्डाभावप्रतिपादनं पूर्वपक्ष्यभिमतं नैव सिद्ध्यति । प्रकृतवाक्येन हि "प्रयोजकज्ञानेनापि शून्यस्य केवलमूढस्य दण्डधारणमनुचितं, ततश्च तादृशस्य दण्डधारणाद्युपलक्षितसंन्यास एव नाधिकारः इत्येव वाक्यार्थाङ्गीकारात् अस्मदिष्टसिद्धिः । ननु विद्यारण्यचरणैः जीवन्मुक्तिविवेके "कौपीनेन लज्जान्यावृत्तिः दण्डेन गोसर्पाद्युपद्रवपरिहारः आच्छादनेन शीतादिपरिहारः इत्यादिवदद्भिः दण्डस्य आवश्यकत्वं नास्तीति सूच्यते, गोसर्पाद्युपद्रवपरिहारेच्छायामेव दण्डपरिग्रहः इति ऐच्छि-

कत्वस्य वर्णितत्वादिति चेत्, मैवम्। कौपीनं दण्ड-माच्छादनं च स्वशरीरोपभोगाय लोकस्योपकारार्थाय च परिग्रहेत् इति विद्वत्परमहंसविषयकवाक्यस्यैव विचारण्यचरणैः व्याख्यातत्वात्। विदुषश्च शरीरोपभोगेच्छायां दण्डादिपरिग्रहः अन्यथा तदभावः इति तद्विषये ऐच्छिकत्वस्यैव तत्र स्फुटीकरणात्। न च शरीरोपभोगार्थो व्यापारः अपरोक्षज्ञानवतो विद्वत्संन्यासिनो न स्यात्, विद्वत्ताव्याघातात् इति वाच्यं— ज्ञानिनां चरित्रस्य दुर्निरूपत्वात्। अत एव वदन्ति स्वाराज्यसिद्धिकाराः ज्ञानिनां अव्यवस्थितस्वरूपताम्।

केऽपि वर्णाश्रमाचारनिष्ठापराः
मुग्धबालप्रमत्तोपमाश्चापरे।
रागिणो भोगिनो योगिनश्चेतरे
ज्ञानिनां लक्ष्यते नैकरूपा स्थितिः॥ इत्यादिना।

विविदिषोस्तु आचारो नियत एवेति तेन दण्डादिकं अवश्यं धार्यमेव। अत एव उत्तरत्र विशिंषन्ति विद्यारण्यचरणाः "विविदिषासंन्यासिनस्तु दण्डग्रहणं मुख्यं" इति। तस्मात् विविदिषासंन्यासिविषये दण्डादीनां अमुख्यत्वं वा वैकल्पिकत्वं वा, परोक्षज्ञानानन्तरमेव तेषां

विसर्जनं वा, प्रकारशतेनापि न केनाप्युपपादयितुं शक्यते ।

तथा परमहंसस्य आच्छादनादिविषयेऽपि नियमो वि-द्यते । अत एवोक्तं

कौपीनयुगलं कन्था दण्ड एकः परिग्रहः ।
यतेः परमहंसस्य नाधिकं तु विधीयते ॥ इति ।

अन्यत्राऽपि—

कौपीनयुगलं वासः कन्थां शीतनिवारिणीम् ।
पादुके चापि गृह्णीयात्कुर्यान्नान्यस्य संग्रहं ॥ इति ।

ननु सूतसंहितायाम्—

कौपीनाच्छादनं वस्त्रं कन्थां शीतनिवारिणीम् ।
अक्षमालां च गृह्णीयाद्वैणवं दण्डमव्रणम् ॥

इत्यादिवाक्यं परमहंसधर्मनिरूपणप्रकरणे पठितं तस्य अधिकवस्त्रादिपरिग्रहमपि प्रापयति । तथा "अध्यात्मपुस्तकं विप्रैः दत्तं गृह्णीत भिक्षुकः" इत्यादिना पुस्तकादिपरिग्रहम-प्यन्यत्र प्रापयति । तथा च कुर्यान्नान्यस्य संग्रहं इति वचनविरोधः स्यात् इति चेत्— नैष दोषः, आच्छाद-नादीनां वैकल्पिकत्वाभिधानात् । एवं वैकल्पिकत्वाङ्गीकारे

सत्येव सर्वेषां वचनानां सार्थक्यं भवति । तर्हि कथं आच्छादनादिषु नियमः इत्युक्तं इति चेन्, नैष दोषः; कौपीनाच्छादनकन्थादण्डकमण्डलुपुस्तकप्रमुखानि यानि वाचनिकानि तेषामेव परिग्रहो नान्येषां इति नियमाङ्गीकारसंभवात् । तत्र कौपीनदण्डकमण्डलुमात्रेण वा, कौपीनकन्थादण्डकमण्डलुमात्रेण वा कश्चिद्विरक्तो यदि तिष्ठति तस्य अधिकपुस्तकादिपरिग्रहाभावात्, पर्यटनादिसौकर्यं ममताराहित्यं च अधिकं सिद्ध्यति इति तु विशेषः । दण्डकमण्डल्वोः संयोगानियमस्तु अपरोक्षज्ञानप्राप्तिपर्यन्तं नियत एवेति तद्विषये ऐच्छिकत्वापादनं तु भ्रान्तिमूलकमेव । अत एवान्यत्र—

जनोरूर्ध्वमधो नाभेः परिधायैकमंबरम् ।
द्वितीयमुत्तरं वासः परिधाय गृहान्व्रजेत् ॥

इति वचनमपि विविदिषोः परमहंसस्य वस्त्रद्वयपरिग्रहमभ्यनुजानाति । पुस्तकादिकं तु श्रवणाद्युपकारितया न परिग्रहाधिक्यप्रापकं । अन्यथा “ संन्यस्य श्रवणं कुर्यात्, इति विधिमनुरुन्धानो विविदिषुः परमहंसः पुस्तकाद्यभावे कथमिव श्रवणादिकमाचरेत् । तस्मात् श्रुतिस्मृतिपुराणवचनैः अभ्यनुज्ञाताः ये परिग्रहाः वस्त्रपुस्तकादयः तेषां अनिषि-

6

त्वमेव । एतेन यत् कैश्चिदुक्तं, कौपीनयुगलं, कन्था— दण्डः—इति त्रयाणामेव श्रुतिचोदितत्वात् , तद्व्यतिरिक्तं परमहंसेन न ग्राह्यं इति, तदपास्तम् । पुस्तकादीनामभावे श्रवणस्यैव लोपप्रसंगेन,— "वृद्धिमिष्टवतो मूलमपि नष्टं" इति न्यायापत्तेः । श्रवणमनननिदिध्यासनैः असकृदनुष्ठितैः ज्ञानपरिपाको यदा भवति तदनन्तरं तु पुस्तकादिकं त्याज्यमेव इति चेत् , चिरं जीवतु भवान् । अयमेवाऽस्मदभिप्रेतोऽर्थः । अत एव पुस्तकनिरपेक्षतया विचारकरणयोग्यतासिद्ध्यनन्तरं पर्यटनकालेऽपि स्वयमेव श्रवणमनननिदिध्यासनानुष्ठानकर्तव्यतां परमहंसस्यावोचाम । यथाकथंचित् श्रवणादिकं आचरणीयं इत्येव श्रुतेरभिप्रायः, नतु बाह्यपरिग्रहसत्त्वासत्त्वादिविषये । अत एव "एकवारं चरेद्भैक्ष्यं न प्रसज्येत विस्तरे" इति परमहंसं प्रति एकवारभैक्ष्यस्य नियमितत्वेऽपि अन्यत्र अशक्तविषये द्विवारभैक्ष्यमपि अभ्यनुज्ञायते श्रवणादिप्रतिबन्धाभावाय । तदुक्तं जीवन्मुक्तिविवेके— ज्ञानाभ्यासिनं प्रति तु एवं स्मर्यते—

एकवारं द्विवारं वा भुंजीत परहंसकः ।
येन केन प्रकारेण ज्ञानाभ्यासी भवेत्सदा ॥ इति ।

अत एव परमहंसमुद्दिश्य पञ्चधा भिक्षाः अभ्यनुज्ञाताः—

तदुक्तं संन्यासोपनिषदि—

माधूकरमसंक्लृप्तं प्राक्प्रणीतमयाचितम् ।

तात्कालिकं चोपपन्नं भैक्ष्यं पञ्चविधं स्मृतं ॥ इति ।

तत्र माधूकरमेव मुख्यं अन्यान्यपि भैक्ष्याणि अनिषिद्धान्येव, वचनप्रामाण्यात् । एतेन माधूकरस्यैव श्रुतौ उक्तत्वेन अन्यभैक्ष्याणां प्रामाणिकत्वं नास्ति इति यत् कैश्चिदुक्तं तदपास्तम् ।

परमहंसेन क्षौरमपि ऋतुसन्धौ कार्यं "पञ्चक्षौराणि भिक्षूणां भवन्ति ऋतुसन्धिषु" इत्यादिवचनात् । चातुर्मास्ये ऋतुद्वयात्मकत्वपक्षमाश्रित्य पञ्चक्षौराणीत्युक्तं । पक्षा वै मासाः इति श्रुत्यनुसारेण, अद्यतनसंप्रदायानुसारेण च मासद्वयमात्रं चातुर्मास्यसंकल्पे तु क्षौराणि षट् भवन्ति । अधिकं तु यतिधर्मसंग्रहादिग्रन्थतोऽनुसन्धेयम् ।

ननु "परमहंसस्य न क्षौरं अस्ति चेदयनक्षौरं" इति नारदपरिव्राजकोपनिषद्वाक्येन अयनक्षौरमेवाङ्गीकृतं परमहंसस्य ऋतुक्षौरादिकं तु कुटीचकादिविषयमेव, श्रुतिवचनबलेनैव व्यवस्थायाः कर्तव्यत्वात् । ततश्च ऋतुक्षौरादिकं संप्रदायागतमपि त्याज्यमेव इति चेत्— अत्र

ब्रूमः । स्मृतिपुराणादिषु परमहंसं प्रति ऋतुक्षौरस्यैव कण्ठतो विधानात् श्रुतौ अयनक्षौरादिकमुच्यमानं विद्वत्परमहंसविषयं इत्येव व्यवस्थापनीयं । स्मृतिपुराणादिवचनानि च यतिधर्मनिर्णयादिग्रन्थतो विस्तरतोऽधिगन्तव्यानि । अथ वा—

कक्षोपस्थशिखावर्जमृतुसन्धिषु वापयेत् ।
न त्रीनृतूनतिक्रामेन्न भिक्षुस्सञ्चरेत्क्वचित् ॥

इत्यादि वचनानुसारेण, ऋतुत्रयादधिककालं क्षौरं विना न स्थातव्यम् , इत्येवंपरं श्रुतौ अयनक्षौरानुवादकं वाक्यमिति सन्तोष्टव्यम् । अत एव अन्यत्रापि वर्णितम् ।

केशश्मश्रुनखादीनां कुरुते वपनं तथा ।
ऋतुसन्धिषु सर्वासु कुरुते वा न वापि सः ॥ इति ।

ननु नारदपरिव्राजकोपनिषदि "परमहंसस्य न क्षौरं अस्तिचेदयनक्षौरं" इति वाक्येन अयनक्षौरस्यैव परमहंसं प्रति विधीयमानत्वात् ऋतुक्षौरस्य कुटीचकादिविषयतया बोध्यमानत्वाच्च केवलस्मृतिपुराणादिवचनावष्टंभमात्रेण कथं ऋतुक्षौरस्य प्रामाणिकत्वमुच्यते ; प्रबलश्रुतिविरोधे स्मृतिपुराणवाक्यानामेव अन्यथा नेतव्यत्वात् , इति चेत्—

अत्र वदामः । यावच्छक्यं स्मृतिपुराणवाक्यानां श्रुतिवचनानां च ऐककण्ठ्योपपादने प्रयत्नः कर्तव्य एव इति क्षुण्णोऽयमध्वा वैदिकाध्वनीनानां । प्रकृते च पूर्वोक्तरीत्या परमहंसं प्रति ऋतुक्षौरप्रतिपादकानां वचनानामपि काचन गतिर्वक्तव्या । यदि यथाश्रुतश्रुत्यर्थग्रहणमात्रेण, अयनक्षौरादिकमेव विवक्ष्येत तदा स्मृतिपुराणादिवचनानि कदर्थितानि भवेयुः । यदि च स्मृतिपुराणवाक्यमात्रमवलंब्येत तदा श्रुतिरपि पीडिता स्यात् । तस्मात् श्रुतिवचनानां स्मृतिपुराणादिवाक्यानां च स्वस्वोचितविषयोपहारेण संभावनीयतया पूर्वोक्तरीत्या पुराणे परमहंसं प्रति ऋतुक्षौरविधायकानां वाक्यानां विविदिषुपरमहंसविषयत्वं परमहंसस्य अयनक्षौरविधायकश्रुतिवाक्यस्य तु विद्वत्परमहंसविषयत्वं, इति विभाग एव व्यवतिष्ठते । ननु विद्वत्पदस्य वा विविदिषुपदस्य वा तत्र अभावात् कथमेवमर्थवर्णनं क्रियते ? इति चेत्—श्रुतिस्मृतिवाक्यानां प्रामाणिकत्वान्यथानुपपत्त्यैवेति ब्रूमः । तर्हि श्रुतिवाक्यविरोधेन स्मृतिपुराणादिवाक्यं त्यज्यतां इति चेत्—नायं साधीयानध्यवसायः । यत्र खलु सर्वात्मना श्रुतिस्मृतिवाक्ययोः श्रुतिपुराणवाक्ययोर्वा ऐककण्ठ्यं उपपादयितुं न शक्यते तत्रैव श्रुत्या स्मृतिपुराणादि-

वाक्यानां बाधनं अगत्या अंगीक्रियते। तत्रैव च श्रुतिस्मृत्योः परं बाधे श्रुतिरेव गरीयसी, इति न्यायोऽपि प्रक्रमते। यत्र तु वचनद्वयस्य अविरोधः उपपादयितुं शक्यते तत्र न तादृशन्यायस्य प्रवृत्तिः इत्येव साधीयसां सरणिः। अपि च शंकरभगवत्पादानारभ्य यावदियन्तं कालं शिष्यप्रशिष्यपरंपरागतास्सर्वेऽपि विविदिषुपरमहंसाः ऋतुक्षौरादिकमेव समाचरन्तो दृश्यन्ते। ततश्च परम्परागतसंप्रदायोऽपि प्रकृतविषये प्रमाणं। अधुनातनैः कैश्चित् नवीननवीनसंप्रदायाविष्करणमात्रेण भगवत्पादपरंपरीणा पारमहंस्यपद्धतिः कथं नाम खिलीक्रियेत?। परंपरागतास्सर्वेऽपि श्रुतितात्पर्यापरिज्ञानादेव ऋतुक्षौरादिकं अन्ववर्तन्त इति चेत्—अहो! अत्यन्तमभिज्ञोऽस्मि। भगवत्पादप्रभृतीनां सांप्रदायिकपरमहंसानां अनेकेषां विषये अनभिज्ञत्वकल्पनापेक्षया भूयोऽनुग्रहन्यायेन स्वस्मिन्नेव अनभिज्ञत्वकल्पनमुचितं इति तु वयं मन्यामहे। न हि खलु प्रचण्डमार्तण्डमण्डले देदीप्यमाने पेचकमात्रानुभवसिद्धोऽप्यन्धकारः प्रमाणपथमवतरिष्यति।

अपि च प्रकृतवाक्यस्य पूर्वोत्तरसन्दर्भपर्यालोचनायामपि अयनक्षौरविधायकमिदं वाक्यं विद्वत्परमहंसविषय-

मेवेति विस्पष्टं भवति। तथा हि पूर्वोत्तरवाक्येषु श्रूयमाणाः परमहंसशब्दाः तद्धर्माश्च विद्वत्परमहंसमेव गोचरयन्तीति विज्ञायते। स्नाननिरूपणावसरे हि "परमहंसस्य मानसस्नानं" इति मानसस्नानं विधीयमानं विद्वत्परमहंसविषयमेव। विविदिषोस्तु त्रिकालस्नानादेः श्रुतिचोदितत्वात्। तथा चोक्तं संन्यासोपनिषदि—त्रिकालस्नानमाचरन् वेदान्तश्रवणपूर्वकं प्रणवानुष्ठानं कुर्वन्" इत्यादि। एवं "भस्मोद्धूलनं परमहंसस्य" इति वाक्यमपि विद्वत्परमहंसमेव गोचरयति, विविदिषोः त्रिपुण्ड्रधारणस्य सूतसंहितादिषु कण्ठोक्तमुपपादितत्वात्। इत्थमेव "हंसपरमहंसयोः करपात्रं" इत्यत्रापि विद्वत्परमहंसं प्रत्येव करपात्रमभ्यनुज्ञायते। विविदिषोर्विषये, माधुकरादिपञ्चभैक्ष्याणां संन्यासोपनिषदि स्पष्टं अभ्यनुज्ञातत्वात्। तथा "दिगंबरं परमहंसस्य" इति वाक्यं विद्वत्परमेव; विविदिषोर्विषये वस्त्रकौपीनकन्थादीनामन्यत्र विहितत्वात्। तदेवं पूर्वोत्तरसन्दर्भयोः श्रूयमाणपरमहंसशब्दाः सर्वेऽपि विद्वत्परमहंसपरा एवेति स्थिते तन्मध्यगतस्य "परमहंसस्य न क्षौरं अस्ति चेदयनक्षौरं" इति वाक्यस्य परं विविदिषुपरत्ववर्णनं कथमुपपद्यतां नाम? तस्मात् अत्रत्यपरमहंसपदमपि

अपरोक्षज्ञानिविद्वत्परमहंसविषयमेवेत्यनिच्छताऽप्यंगीकर्तव्यम्। अपरोक्षज्ञानिनः कथं विधिनिषेधादिकं? इति शंका तु पूर्वं भूयोभूयोऽपि परिहृतैवेति पुनः पुनस्तदुल्लेखनं लज्जावहं भवति। तस्मादस्मात्पिष्टपेषणादुपरंस्यामः।

किंच पूर्वपक्षिणाऽपि स्मृतिपुराणादिवाक्यनिरपेक्षमेव श्रुतिव्यवस्था क्रियत इति नैकान्तेन नियन्तुं शक्यते। सार्ववर्णिकभैक्ष्यस्य परमहंसविषये श्रूयमाणस्यापि कलौ तन्निषेधकपाराशरादिस्मृतिवचनावलंबेन, तादृशवाक्यानां युगान्तरविषयत्वस्यैव पूर्वपक्षिणाऽप्यंगीकार्यत्वात्। यदि तु पराशरस्मृतिवचनानुसारेण परमहंसं प्रति श्रुतौ विहितस्यापि सार्ववर्णिकभिक्षाटनस्य तादृशस्मृत्यविरोधाय विविदिषुविषये संकुचद्वृत्तितामाश्रित्य विद्वत्परमहंसविषय एव सार्ववर्णिकभैक्ष्यविधिरयं व्यवस्थाप्यते, तर्हि तथैव तुल्यन्यायेन "ऋतुसन्धिषु क्षौरकर्तव्यताप्रतिपादकस्मृतिपुराणवचनानां बहूनामविरोधाय परमहंसविषये अयनक्षौरप्रतिपादकवाक्यस्य विविदिषुविषये संकुचद्वृत्तिताऽऽश्रयणेन तस्य विद्वत्परमहंसविषयकत्वमेव व्यवस्थाप्यतामिति समानोऽयमावयोः पन्थाः। अन्यथा परमहंसंमन्यः प्रकृतपूर्वपक्षी सार्ववर्णिकभैक्ष्यनियमं कुतो वा स्वयं नाद्रियते? तस्मात् सार्ववर्णिक-

भैक्ष्यनिषेधप्रतिपादकस्मृतिवचनावलंबनेनैव पूर्वपक्षिणापि तस्य अनाद्रियमाणत्वात् ब्राह्मणभैक्ष्यस्यैव अंगीक्रियमाणत्वाच्च, स्मृतिवचनानां क्वचित्प्रामाण्यांगीकारे तथैव अयनक्षौरं विहाय विविदिषुयोग्यं ऋतुक्षौरादिकमेव स्मृतिपुराणाद्युक्तमवलंब्यतामिति तुल्यं। न हि स्वाभिमतविषयमात्रे स्मृत्यनुरोधेन श्रुतिसंकोचनं, अनभिमतविषये तु स्मृतिविरोधेनैव श्रुत्यर्थवर्णनमितीदं अर्धजरतीयन्यायाश्रयणं प्रमाणविदां युक्तरूपं। तस्मात् साहसमूलकमेवेदं कृत्यं पूर्वपक्षिणां, यत्किल असांप्रदायिकश्रुतिस्मृतिविरुद्धदुराचारप्रवर्तनं नाम। अभ्युपेत्यवादेन चैतदखिलं प्रत्यपीपदाम। वस्तुतस्तु परमहंसमुद्दिश्य विधीयमानात्मानुसन्धानविधेः स्तवनार्थं प्रवृत्तार्थवादवाक्यमध्य एव "अस्ति चेदयनक्षौरं" इति वाक्यस्य निपतितत्वात् सर्वमिदमर्थवादस्वरूपमेव वचनजातमिति पूर्वं प्रतिपादितत्वात् नातीवास्माकमत्राभिनिवेशः। परं तु ये तावत् एतत्सर्वं विधिवाक्यमेवेत्याशेरते तेषां भ्रान्तिनिवारणार्थमेव 'तुष्यतु दुर्जनः' इति न्यायेन विषयविभागमिमं प्रादीदृशाम।

अपि च सूक्ष्मेक्षिकया विचार्यमाणे परमहंसव्यतिरिक्ताः कुटीचकादिपञ्चसंन्यासभेदा अपि स्मार्तसंन्यासा एवेति

विशदमेवेदं विमलमतीनां। अत एव वैदिकसंन्यासरूपेयं पारमहंस्यवृत्तिरेव शिष्टपरंपरायां सांप्रतं संप्रवर्तते। अत एव च विद्यारण्यादिभिः जीवन्मुक्तिविवेकादिग्रन्थवरेषु विद्वत्संन्यासरूपा विविदिषासंन्यासरूपा चेयं पारमहंस्यवृत्तिरेव प्रतिपादिता प्राधान्येन। तदेवं स्थिते कुतोनामेयं कुटीचकादिधर्मविचारणा? कुतस्तरां तत्प्रशंसापरार्थवादचिन्ता? कुतस्तमां कुटीचकादिविषये ऋतुक्षौरायनक्षौरादिसद्सद्भावचिन्ता? तथा च कुटीचकाद्याश्रमाणां तद्धर्माणां च स्मार्तत्वात्, प्रागुक्तपरमहंसचर्याप्रशंसकार्थवादवाक्येऽपि श्रूयमाणाः कुटीचकादिधर्माः स्मृत्युक्ता एव सन्तः श्रुत्या अनूद्यन्ते प्रकृतार्थस्तवनार्थं। ततश्च अयनक्षौरादिबोधकश्रुतीनां स्मृत्यनुवादमात्ररूपत्वात् स्मृतितुल्यबलत्वेन परमहंसविषये ऋतुक्षौरकर्तव्यताप्रतिपादकपरःशतस्मृतिपुराणवाक्यैर्बाध एव न्याय्यः; स्मृत्यनुवादमात्ररूपत्वेन तेषां श्रुतित्वप्रयुक्तप्राबल्याऽभावात्। एतेन अयनक्षौरस्य परमहंसविषये श्रुत्यैव विधीयमानत्वात् ऋतुक्षौरप्रतिपादकपुराणादिवचनानां श्रुत्या बाध एव स्यात् श्रुतेरेव प्राबल्यात् इति यत्कैश्चिदुक्तं तदपि परास्तं, अयनक्षौरप्रतिपादकश्रुतेः स्मृत्यनुवादरूपतयैव प्रवृत्तत्वेन श्रुतित्वप्रयुक्तप्राबल्याभावात्, विधायकत्वस्य असंप्रतिपन्नत्वाच्च।

ननु न कुत्रापि दृष्टचरी काचिदेषा रीतिः, यत्किल श्रुत्युक्तधर्माणां स्मृत्यनुवादरूपताङ्गीकरणं नाम । न हि खलु पूर्वप्रवृत्ता श्रुतिः पश्चाद्भाविपुरुषकर्तृकां स्मृतिं अनुवदितुमीष्टे ; तादृशपुरुषस्य वा तत्प्रणीतस्मृतेर्वा तदानीमनुपस्थितत्वात् इति चेत्— अत्र ब्रूमः । न तावददृष्टचरी सैषा सरणिः ; बृहदारण्यके अष्टमाध्याये तृतीयब्राह्मणे "स यः कामयेत महत्प्राप्नुयां" इत्यादिना विहितस्य मन्थकर्मणः श्रुत्या प्रतिपाद्यमानत्वेऽपि, तादृशश्रुतिवाक्यस्य स्मृत्यनुवादरूपतामभ्युपगम्य तत्प्रतिपादितमन्थकर्मणोऽपि स्मार्तत्वमेवेति भगवता भाष्यकारेण व्यवस्थापितत्वात् । तथा च तत्र भाष्यं "स्मार्तं हीदं मन्थकर्म । ननु श्रुतिविहितं सत् कथं स्मार्तं भवितुमर्हति ? स्मृत्यनुवादिनी हि श्रुतिरियं । अत एव आवसथ्याग्नावेतत्कर्म विधीयते" इति । ननु भाष्यकारोक्तमपि कथं संगच्छतां ? पूर्वप्रवृत्तश्रुतिवाक्यस्य पश्चाद्भाविस्मृतिवचनानुवादासंभवात् इति चेत्— नैष दोषः । श्रुतेः त्रिकालव्यापित्वेन पूर्वकालमात्रवर्तित्वस्य प्रामाणिकैरसंप्रतिपन्नत्वात् । अन्यथा याज्ञवल्क्यादीनां वादिविजयादिप्रतिपादककथारूपश्रुतिवाक्यानां तद्घटितवाजसनेयादिशाखायाश्च याज्ञवल्क्यादिभिरधीयमानत्वं कथमुपप-

श्रेत । तस्मात् याज्ञवल्क्यादिभिरपि स्वकथाप्रतिपादकश्रुतिवाक्यानां स्वयमेव अधीतत्वान्यथानुपपत्त्या आविवृत्तान्तानुवादकत्वमपि श्रुतेरवश्यमङ्गीकरणीयमेव । अत एव एतादृशीं शंकामुद्भाव्य इत्थं समाधायि भगवता आनन्दगिर्याचार्येण । "न च पूर्वभाविन्याः श्रुतेः उत्तरभाविस्मृत्यनुवादित्वासिद्धिः, तस्यास्त्रैकाल्यविषयत्वाभ्युपगमात्" इति । तस्मात् श्रुतेः क्वचित् स्मृत्यनुवादकत्वमपि संभवतीति नेयमदृष्टचरी रीतिः । तथैव प्रकृतेऽपि नारदपरिव्राजकोपनिषदि कुटीचकादीनां परमहंसव्यतिरिक्तानामाश्रमाणां तद्धर्माणां वा बोध्यमानत्वेऽपि तेषां स्मृत्युक्तानामेव सतां प्रकृतार्थवादोपयोगित्वेनानुवादः इत्येव सुधीभिः सूक्ष्मेक्षिकया परिकलनीयं । न चैवं स्वकपोलकल्पनया वयं व्यवस्थापयामः । भाष्यकारैरेव प्रकृतव्यवस्थायाः बृहदारण्यकभाष्ये सूचितत्वात् व्याख्याकारैः स्फुटीकृतत्वाच्च । तदुक्तं भाष्यकारैः "त्यक्त्वा स्मार्तं लिंगं" इत्यादि । आनन्दगिर्याचार्याश्च एवं तत्र व्याचचक्षिरे । "त्रिदण्डेन यतिश्चैव इत्यादिस्मृतेः न परमहंसपारिव्राज्यमत्र विवक्षितं, इत्याशंक्याह त्यक्त्वा स्मार्तं लिंगं इति ।" तथा "प्रत्यक्षश्रुतिविरोधाच्च स्मार्तसंन्यासो मुख्यो न भवतीत्याह— अथेति ।"

इत्थं भाष्यकारीयवचनं व्याचक्षाणानां आनन्दगिर्याचार्याणां कुटीचकादिसंन्यासाः सर्वे स्मार्तसंन्यासभेदा एव, परमहंसपारिव्राज्यमेकमेव श्रौतमिति स्फुटतरमाशयोऽवगम्यते। यदि नारदपरिव्राजकाद्युपनिषत्सु कुटीचकादिसंन्यासाः अपूर्वतयैव विहिताः स्युः, तर्हि कुटीचकादिसंन्यासानां स्मार्तत्वमभ्युपगम्य तेषां अमुख्यत्वप्रतिपादनं भाष्यव्याख्याकाराभ्यां क्रियमाणं कथं संघटेत? तस्मात्परमहंसव्यतिरिक्तानां पञ्चानामपि संन्यासानां स्मार्तत्वममुख्यत्वं च सुस्थितमेव। एतेन यदुद्घुष्यते कैश्चिदवधूतंमन्यैः वयमपि वैदिका एव वेदविहितावधूताश्रमस्यैवास्माभिरंगीकृतत्वादित्यादि तत्सर्वं जन्मवन्ध्यायाः पुत्रोत्सवलाभलोलुपतामेवानुकरोति ; वेदे अवधूताश्रमस्य अविधानात्। नारदपरिव्राजकाद्युपनिषत्सु क्वचित्क्वचित् परमहंसचर्याप्रशंसकार्थवादोपबृंहणे तु श्रूयमाणोऽवधूतशब्दः स्मृतिपुराणाद्युक्तावधूताश्रममेव क्रोडीकरोतीति नैतावता तस्यापि वैदिकत्वकल्पनप्रत्याशा युक्तरूपा।

ननु परमहंसेन सह षड्विधानामपि संन्यासिनां धर्मभेदस्य नारदपरिव्राजकोपनिषदि बोध्यमानत्वात् तुल्यन्यायेन परमहंसस्यापि स्मार्तसंन्यासित्वमेव स्यात् स्मार्तसंन्यासिमध्यपातित्वात् इति चेत् — मैवं, परमहंसपारिव्राज्यस्य

बृहदारण्यके विस्पष्टमेव विहितत्वात् । "एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति" "एतमेव विदित्वा मुनिर्भवति" इत्यादिवाक्यैः विद्वत्संन्यासविविदिषासंन्यासात्मकपरमहंसपारिव्राज्यविधेः भाष्यकारादिभिरभिव्यंजितत्वात् । ततश्च बृहदारण्यकविहितपरमहंसाश्रमस्यैव स्मृतिपुराणादिषु अनूदितस्य पुनः श्रुत्यैव अनुवादः क्रियते कुटीचकादिषड्विधसंन्यासनिरूपणावसरे, न तु तत्रानुवादमात्रेण प्रत्यक्षश्रुतिविहितस्य पारमहंस्यस्य श्रौतत्वमपैष्यति । तस्मात्परमहंसाश्रमस्य वैदिकत्वं निष्प्रत्यूहमेव । ननु बृहदारण्यके पारमहंस्यविधिवदेव नारदपरिव्राजकाद्युपनिषत्स्वपि "संन्यासष्षड्विधो भवति, कुटीचको बहूदको हंसः परमहंसः तुरीयातीतः अवधूतश्चेति" इत्यादिना कुटीचकादिसंन्यासानां अनुक्रान्तत्वात्, तथा तत्तल्लक्षणानामपि पृथक्पृथगेव अभिहितत्वाच्च तेषामपि वेदविहितत्वेन वैदिकत्वं कुतो नाङ्गीक्रियते ? कथं वा तेषां श्रौतत्वस्मार्तत्वविवेकः कर्तव्यः ? इति चेत्— उच्यते । न तावत् श्रुतौ निरूपितत्वमात्रेण धर्माणां श्रौतत्वं, न वा स्मृतौ निरूपितत्वमात्रेण तत्रत्यधर्माणां स्मार्तत्वमिति च नियन्तुं शक्यं । अन्यथा "उद्यन्तमस्तंयन्तमादित्यमभिध्यायन् कुर्वन् ब्राह्मणो विद्वान्

सकलं भद्रमश्नुते " "सन्ध्यां मनसा ध्यायेत् " इत्यादि-श्रुतिवचनैरपि सन्ध्योपासनस्य बोध्यमानत्वेन सन्ध्यावन्दनादेः केवलश्रौतकर्मत्वापातात्। न चेष्टापत्तिः, स्मार्तकर्मणः एव सन्ध्योपासनादेः परिगणनात्। तथा "ब्रह्महत्याश्वमेधाभ्यां न परं पुण्यपापयोः" इत्यादिस्मृतिवाक्येषु अश्वमेधस्य प्रशंसनात् तस्यापि स्मार्तत्वापत्तिः। तस्मात् श्रुतिनिरूपितत्वेन श्रौतत्वं स्मृतिनिरूपितत्वेन स्मार्तत्वं इति विभागकरणं अन्धपरंपरामात्रमेव।

परं तु अर्थवादादिपरिकरपुरस्सरं श्रुतौ विधायकवाक्येन वा विध्युन्नायकपदघटितवाक्येन वा विधीयमानधर्माणां श्रौतत्वं, तथा अर्थवादादिपुरस्सरं लिङादिघटितवाक्यैः स्मृतिपुराणादिषु विधीयमानधर्माणां स्मार्तत्वं इत्येव व्यवस्था स्वीकरणीया। अन्यथा श्रौतस्मार्तधर्माणां परस्परसंकीर्णतया प्रतीयमानानां प्रकारान्तरेण दुर्विवेचत्वात्। अत एव "वायव्यं श्वेतमालभेत भूतिकामः" इति विधानानन्तरं, "वायुर्वै क्षेपिष्ठा देवता वायुमेव स्वेन भागधेयेनोपधावति" इत्याद्यर्थवादः श्रूयते प्रकृतार्थस्तवनाय। ततश्च उक्तरीत्या अर्थवादादिपुरस्सरं श्रुतौ विधीयमानवायव्यादियागानां यथा श्रौतत्वं तथैव बृहदारण्यके "एतमेव प्रव्राजिनो लोक-

मिच्छन्तः प्रव्रजन्ति" इति पारमहंस्यविधानानन्तरं "एत-द्धस्म वै तत्पूर्वे विद्वांसः प्रजां न कामयन्ते किं प्रजया करिष्यामो येषां नोऽयमात्माऽयं लोक इति" इत्याद्यर्थ-वादानां श्रूयमाणत्वात् तादृशार्थवादोपोद्बलितश्रुतिवाक्येन विध्युन्नायकपदघटितेन विधीयमानत्वात् प्रकृतपारमहं-स्यस्य श्रौतत्वमेवांगीकरणीयम्। न तु तथा श्रुतौ कुत्राऽपि अर्थवादादिलक्षणपुरस्सरं कुटीचकाद्याश्रमविधायकं वचनमु-पलभामहे, येन तेषां वैदिकत्वं प्रतिपद्येमहि। तस्मात्परम-हंसव्यतिरिक्ताश्रमाणां उक्तदिशा स्मार्तत्वमेवेति निर्णयात्, अधुनातनानां अवधूतंमन्यानां चर्या न तु वैदिकी, परं तु स्मार्तचर्यैवैषा इति सुधीभिरवधारणीयम्। ननु कथं तेषां सर्वेषां स्मार्तत्वं? यद्यपि कुटीचकादीनां संन्यासानां केषां-चित् स्मार्तत्वं आनन्दगिर्याचार्यैरभिहितं तथापि तुरीया-तीतावधूतोपनिषदि अवधूतोपनिषदि च अवधूतचर्यायाः भूयस्तरां उपपादितत्वात् अवधूताश्रमस्य वैदिकत्वमेवाभ्यु-पगन्तव्यम् इति चेत्— नायं दोषः। तत्र अवधूतशब्देन अतिवर्णाश्रमिण एव विवक्षितत्वात्। अत एव तुरीया-तीतावधूतोपनिषदि "त्यक्तवर्णाश्रमाचारः" इत्यादिना अवधूतलक्षणं बोध्यमानं संगच्छते। अत एव च तत्र

'तुरीयातीतावधूतवेषेण अद्वैतनिष्ठापरः" इति विशिनष्टि श्रुतिः । अस्य च अयमर्थः; अतिवर्णाश्रमिणः वेषभाषादिचर्या कथं इति शंकायां तुरीयातीतावधूतयोः स्मृतिप्रसिद्धयोः स्मार्तसन्यासिनोः यादृशी चर्या तत्सदृशी अतिवर्णाश्रमिणोऽपि । ततश्च गोमुखाहारेण वा अजगरवृत्त्या वा बाह्यचर्या, अद्वैतनिष्ठापरत्वं च आन्तरचर्या अतिवर्णाश्रमिणां भवति इत्येव स्वरसतोऽर्थः प्रतीयते । अवधूतोपनिषदि तु तत्रत्याऽवधूतशब्देन अतिवर्णाश्रम्येवोच्यते इति स्फुटतरं निरटङ्कि—

यो विलंध्याश्रमान्वर्णानात्मन्येव स्थितस्सदा ।
अतिवर्णाश्रमी योगी अवधूतस्स कथ्यते ॥ इत्यादिना ।

तस्मात् अवधूतोपनिषदपि स्मृतिप्रसिद्धस्य अवधूतस्य वैदिकत्वं प्रतिपादयितुं न क्षमेत । अवधूतशब्दश्रवणमात्रेण च न भ्रमितव्यम्, अतिवर्णाश्रमिण एव तत्रत्यावधूतशब्देन ग्रहणमिति श्रुत्यैव स्पष्टीकृतत्वात् ।

अथवा तुरीयातीतावधूतयोरपि वैदिकत्वमेवेति अभ्युपेत्यवादेन वयमंगीकुर्मः, तथापि तयोर्विविदिषासंन्यासिमध्यपातित्वं पूर्वपक्ष्यभिमतं न सिध्येदेव; अपरोक्षज्ञान-

वद्विद्वत्सन्यासिनामवस्थाभेदरूपत्वस्यैव, तयोरभ्युपेयत्वात्। भागवते अवधूततुल्यपरभक्तलक्षणप्रस्तावे—

देहं विनश्वरमवस्थितमुत्थितं वा
सिद्धो न पश्यति यतोऽध्यगमत्स्वरूपं ।
दैवादुपेतमथ दैववशादपेतं
वासो यथा परिकृतं मदिरामदान्धः ॥

इत्यादिना 'यतोऽध्यगमत्स्वरूपमिति स्वरूपज्ञानवतो विद्वत्संन्यासिन एव अवस्थाभेदोऽयमिति स्फुटीकृतत्वात्। तस्मात् तुर्यातीतावधूतयोरभ्युपेत्यवादेन वैदिकत्वांगीकारेऽपि तयोः विद्वत्संन्यासपरिपाकरूपत्वमेव भविष्यतीति नैतावता तयोः विविदिषुमध्यपातित्ववर्णनं पूर्वपक्ष्यभिमतं सेत्स्यतीति, अलमनेन प्रसक्तानुप्रसक्तार्थप्रपञ्चनपरिपाटी-पाटवप्रकटीकरणचापलेन । प्रकृतमनुसरामः ।

तथा चातुर्मास्याऽनुष्ठानं तदारम्भे व्यासपूजादिकं च संप्रदायाऽनुसारेणैव अनुष्ठातव्यं परमहंसैः ।

ननु मैत्रेयोपनिषदि

पाषाणलोहमयमृन्मयविग्रहेषु
पूजा पुनर्जननभोगकरी मुमुक्षोः ।

तस्माद्यतिः स्वहृदयार्चनमेव कुर्यात्
बाह्यार्चनं परिहरेदपुनर्भवाय ॥

इति वाक्येन परमहंसं प्रति बाह्यार्चनानिषेधपूर्वकं मानसपूजैव अभ्यनुज्ञाता। ततश्च श्रुतिविरुद्धबाह्यव्यासपूजादिकं संप्रदायसिद्धमपि कथं न्याय्यं इति चेत् मैवं; बाह्यपूजानिषेधवचनस्य दैनन्दिनपूजाविषयत्वात्। व्यासपूजाविषये तु मन्त्रतन्त्रविधानपूर्वकं बाह्यपूजा कर्तव्यैव इति स्मृतिपुराणादिवचनैर्बहुशो बोध्यमानत्वात्। तथा चोक्तं यतिधर्मनिर्णये—

आषाढस्य सिते पक्षे पूर्वाह्णव्यापिनी यदा।
पूर्णमासी, तदा तत्र व्यासरूपी जनार्दनः॥

पूज्यश्च यतिभिस्सर्वैः हंसैश्च परहंसकैः।
उपचारैः षोडशभिः पूजनीयः प्रयत्नतः॥

मन्त्रतन्त्रविधानेन व्यासरूपी जनार्दनः। इति।

आत्मपुराणे च एकादशाध्याये परमहंसानुद्दिश्य तेषां व्यासपूजाऽनुष्ठानं बाह्यरूपमेवेति प्रयोगविवरणपूर्वकं विस्पष्टं प्रत्यपादि। संप्रदायश्च शंकराचार्यपादप्रभृति इयन्तंकालं तथैव अनुस्यूततया समागतो वर्तते। एवं स्थिते यदुच्यते कैश्चि-

दाधुनिकैः "व्यासपूजापि परमहंसस्य, मानसपूजारूपैव, ऋतुक्षौरादिकं च न कर्तव्यमेव" इत्यादि, तत्सर्वं श्रुतिस्मृतिपुराणादिवचनसामरस्यप्रतिपादनाऽसामर्थ्यमेव तेषां स्फुटीकरोति। सर्वेषां अविरुद्धतयैव कस्यचिदर्थस्य कल्पनीयत्वात्। एतेन भस्मोद्धूलनस्यैव श्रुतौ विधानात् तदेव धारणीयं परमहंसेन न त्रिपुण्ड्रधारणं, इत्यादि नूतननूतनाचारकल्पनाऽपि तेषां प्रत्याख्याता। श्रुतौ विधीयमानस्य भस्मोद्धूलनस्य विद्वत्परमहंसविषयतयैव व्यवस्थापनीयत्वात्। विविदिषोः परमहंसस्य तु विषये त्रिपुण्ड्रधारणावश्यकत्वस्य सूतसंहितादिषु विस्पष्टमेव विधीयमानत्वात्। तथा चोक्तं सूतसंहितायां

अग्निरित्यादिभिर्मन्त्रैः कुर्यादुद्धूलनं मुदा।
ओमोमिति च त्रिः प्रोच्य परहंसस्त्रिपुण्ड्रकं॥ इति।

तदेवं विद्वत्संन्यासिनां विविदिषासंन्यासिनां च धर्माः संक्षेपतोऽत्र निरूपिताः। यद्यपि यतिधर्मसंग्रहादिषु सर्वधर्माणां सविस्तरं निरूपितत्वात् ग्रन्थस्यास्य उत्थितिरेव नास्ति, तथापि अद्यतनानां प्राज्ञंमन्यानां तादृशग्रन्थेषु अनादरातिशयं अप्रामाणिकत्वबुद्धिं च समवलोक्य, प्रामाणिकग्रन्थानां

तेषां श्रुतिस्मृतिपुराणाद्यविरुद्धतां प्रसाधयितुमेवास्माकमयमुद्यमः; न तु अपूर्वार्थनिरूपणे इति विदांकुर्वन्तु विद्वन्मणयः। गुरुचरणारविन्दाभ्यां नमो नमः॥

पूर्वाचार्यवचोविचाररचनास्वत्यादरं बिभ्रता
सर्वश्रुत्यविरोधसाधनविधावौत्सुक्यमासेदुषा।
श्रीमत्पारमहंस्यधर्मसरणिं स्पष्टं विजिज्ञासता
तद्धर्मः पटुयुक्तिभिः स्फुटतरं मीमांसितोऽसौ मया॥

विद्वत्संन्यासभाजामथ च विविदिषान्यासिनां धर्मभेदाः
प्रायस्संसृष्टरूपाः श्रुतिषु निगदिताः प्राकृतैर्दुर्विवेचाः।
ऐदम्पर्येण तेषां विभजनसरणिं साधवो येऽर्थयन्ते
तत्तादृग्वैदिकानामुपकृतिविधये गुंफितोऽयं निबन्धः॥

कर्मन्दिधर्ममीमांसा सेयमानन्ददायिनी।
अर्पिताऽभीष्टफलयोरार्पिता गुरुपादयोः॥

इति श्रीमत्परमहंसेत्यादिविरुदाङ्कित श्रीशिवानन्दतीर्थस्वामिकरकमलसंजातेन सच्चिदानन्दतीर्थाख्येन भिक्षुणा संग्रथितेयं
पारमहंस्यधर्ममीमांसा
समाप्ता

॥ ओं तत् सत्॥

